१ भा॰ द॰ पू॰ १

॥श्रीगणेशायनमः विश्वसर्गविसर्गादिनवलक्षणलक्षितम् श्रीकृष्णाख्यंपरंधामजगद्धामनमामतत् १ दशमेदशमं
लक्ष्यमाश्रिताश्रयविग्रहम् क्रीडद्यदुकुलांभोधौपरानंदमुदीर्यते २ दशमेकृष्णसत्कीर्तिवितानायानुवर्ण्यते धर्मग्लानि
निमित्तस्तुनिरोधोदुष्टभूभुजाम् ३ प्राकृतादिश्चतुर्द्धायोनिरोधःसतुवर्णितः तत्तत्प्रसंगतःसृष्टिसंहारादिनिरूपणैः ४ कृत्वान
वतिरध्यायादशमेकृष्णकीर्तये आदौचतुर्भिरध्यायैर्ब्रह्मप्रार्थनयाऽवनेः भारंहर्तुंहरेर्जन्मसप्रसंगंनिरूप्यते ५ गोकुलेमथुरायां
चद्वारवत्यांततःक्रमात् कृष्णलीलात्रिधाप्रोक्ता तद्भेदैस्त्वनेकधा ६ सपंचत्रिंशताध्यायैर्वृहद्वृंदाव

श्रीगणेशायनमः कथितोवंशविस्तारोभवतासोमसूर्ययोः राज्ञांचोभ
यवंश्यानांचरितंपरमाद्भुतम् १ यदोश्चधर्मशीलस्यनितरांमुनिस
त्तम तत्रांशेनावतीर्णस्यविष्णोर्वीर्याणिशंसनः २ अवतीर्ययदोर्वंशे
भगवान्भूतभावनः कृतवान्यानिविश्वात्मातानिनोवदविस्तरात् ३

नादिषु गोकुलेवसतोलीलावर्ण्यतेस्फुरदुष्करा ॥७ एकेनयमुनावारिण्यक्रूरेणकृतास्तुतिः एका
दशभिराख्यातालीलामधुवनेकृता ८ शेषैर्द्वारवतीलीलातन्निर्माणादिवर्ण्यते एवंनवतिरध्यायादशमेविशदार्थकाः ९ ॥
तत्रतुप्रथमेकंसःस्वमृत्युंदेवकीसुतात् श्रुत्वाभीतोऽवधीत्तस्याःषड्गर्भानितिवर्ण्यते १० कृष्णावतारचरितश्रवणामृतनिर्वृतः उ
क्तानुवादेनोत्कण्ठ्याद्राजापृच्छतितत्पुनः ११ कथितोवंशविस्तारइति १ अंशेनेतिप्रतीत्यभिप्रायेणोक्तम् ॥ २ ॥ ननूक्ता
निजातोगतःपितृगृहाद्व्रजमेधितार्थइत्यादिनासत्यंपुनर्विस्तरेणवदेत्याह अवतीर्येति ॥ ३ ॥ ६ ॥ ६ ॥

१

अत्र लोके त्रिविधा जनाः मुक्ता मुमुक्षवो विषयिणश्च तेषां मध्ये अत्र न कस्याप्यलं प्रत्यय इत्याह निवृत्ततर्षैरिति॰ गततृष्णैः मुक्तैरपीत्यर्थः मुमुक्षूणामयमेवोपाय इत्याह भवौषधादिति॰ विषयिणां परमो विषयोऽयमेवेत्याह॰ श्रोत्रमनोभिरामादिति अपगतासु कृ यस्मात्तमात्मानं हंतीत्यपशुघ्नः तस्मात् पशुघातिन इति वा ४ किंच अस्मत्कुलदैवतं कृष्णोऽत एतत्कथैव नित्यं श्रोतव्येत्याशयेनाह पितामहा इति अमरान् जयंतियैस्तैर्देवव्रतो भीष्मः तदाद्यैरतिरथैः तिमिंगिलतुल्यैर्दुरत्ययं वत्सपदमिव अत्यल्पं कृत्वा तुच्छीकृत्यातरन् स्मयः कृष्ण एव प्लवो येषां तेन तस्य वीर्याणि वदस्वेति तृतीयश्लोके नान्वयः ५ न केवलं

निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामात् क उत्तमश्लोकगुणानुवादात्पुमान्विरज्येत विना पशुघ्नात् ४ पितामहा मे समरेऽमरंजयैर्देवव्रताद्यातिरथैस्तिमिंगिलैः दुरत्ययं कौरवसैन्यसागरं कृत्वातरन्वत्सपदं स्म यत्प्लवाः ५ द्रौण्यस्त्रविप्लुष्टमिदं मदंगं संतानबीजं कुरुपांडवानां जुगोप कुक्षिं गत आत्तचक्रो मातुश्च मे यः शरणं गतायाः ६ वीर्याणि तस्याखिलदेहभाजामंतर्बहिः पूरुषकालरूपैः प्रयच्छतो मृत्युमुतामृतं च मायामनुष्यस्य वदस्व विद्वन् ७

पांडवानेवारक्षत् इदं मम शरीरमपि योरक्षितवानित्याह द्रौण्यस्त्रविप्लुष्टमिति॰ द्रौणेरश्वत्थाम्नो ब्रह्मास्त्रेण दग्धमिदं मच्छरीरं च कुरूणां पांडवानां च संतानस्य निदानं मम मातुः कुक्षौ प्रविष्टो धृतचक्रो यो जुगोपेति ६ अखिलदेहभाजां सर्वप्राणिनां अंतश्च बहिश्च पुरुषरूपेण कालरूपेण च अंशाभिप्रायेण बहुवचनं मृत्युं संसारं उत अपि अमृतमपि प्रयच्छतो वीर्याणि वदस्व ब्रूहि अयं भावः अंतर्यामिरूपेणांतर्दृष्टीनां मुक्तिं बहिर्दृष्टीनां च कालरूपेण मृत्युं ददातीति यतः

भा०टी०
पृ०
२

ननुबलंगदंसारणंचदुर्मदंविपुलंध्रुवं वसुदेवस्तुरोहिण्यांकृतादीनुदपादयदितिरोहिण्यास्तनयोरामः प्रोक्तः वसुदेवस्तुदे
वक्यामष्टपुत्रानजीजनत् कीर्तिमंतंसुषेणंचभद्रसेनमुदारधीः मृदुंसंतर्दनंभद्रंसंकर्षणमहीश्वरं अष्टमस्तुतयोरासी
त्स्वयमेवहरिः किलेतिपुनर्देवक्यागर्भसंबंधस्तस्यैवोक्तः सकुतोघटतइत्याक्षेपः ८ कस्मादिति भगवतः कंसभयश

रोहिण्यास्तनयःप्रोक्तोरामःसंकर्षणस्त्वया देवक्यागर्भसंबंधःकुतोदेहांतरंविना ८
कस्मान्मुकुंदोभगवान्पितुर्गेहाद्व्रजंगतः क्ववासंज्ञातिभिःसार्द्धंकृतवान्सात्वतांपतिः
९ व्रजेवसन्किमकरोन्मधुपुर्यांचकेशवः भ्रातरंचावधीत्कंसंमातुरद्धाऽतदर्हणं १०।
देहंमानुषमाश्रित्यकतिवर्षाणिवृष्णिभिः यदुपुर्यांसहावात्सीत्पत्न्यःकत्यभवन्प्रभो ११
एतदन्यच्चसर्वंमेमुनेकृष्णविचेष्टितं वक्तुमर्हसिसर्वज्ञश्रद्दधानायविस्तृतं १२ नैषातिदुःस
हाक्षुन्मांत्यक्तोदमपिबाधते पिबंतंत्वन्मुखांभोजच्युतंहरिकथामृतं १३ सूतउवाच एवंनिश
म्यभृगुनंदनसाधुवादंवैयासकिःसभगवानथविष्णुरातं प्रत्यर्च्यकृष्णचरितंकलिकल्मष
ध्नंव्याहर्तुमारभतभागवतप्रधानः १४

काया: असंभवादित्यर्थः ९ मातुर्भ्रातरंकंसंतस्याद्धानर्हंअद्धासाक्षात् क०ऽ
स्मादवधीत् १० ११ १२ ननुक्षुत्तृड्भ्यांपीडितस्यापितवकुतःश्रवणावकाशस्तत्राहनैषेति त्यक्तोदकस्यापिममजीवनंहरिकथामृतपा
ननिमित्तंनतुपरमेसयस्यएवजीवितंनस्यादित्यर्थः १३ एवंसाधुवादंसमीचीनंप्रश्नंभागवतप्रधानभागवतेषुश्रेष्ठः १४ ॥ १ ॥ १ ॥

राम
२

व्यवसिताकृतनिश्चयायतस्यनोबुद्धेः १५ १६ तत्रतावत्प्रथमं भगवदवतारकारणमाहभूमिरित्यादिनवभिः श्लोकैः दृप्तनृपव्या
जायेदैत्यास्तेषामनीकशतानां अयुतैर्योभूरिभारस्तेनाक्रांता १७ विभोरंतिकेउपस्थितासती १८ १९ २० पौरुषीपुरुषस्यभ

श्रीशुकउवाच सम्यग्व्यवसितावुद्धिस्तवराजर्षिसत्तम वासुदेवकथायांतेयज्जातानैष्ठिकीम
तिः १५ वासुदेवकथाप्रश्नः पुरुषांस्त्रीनपुनातिहि वक्तारंप्रच्छकंश्रोतॄंस्तत्पादसलिलंयथा
१६ भूमिर्दृप्तनृपव्याजदैत्यानीकशतायुतैः आक्रांताभूरिभारेणब्रह्माणंशरणंययौ १७ गौर्भू
त्वाऽश्रुमुखीखिन्नाक्रंदंतीकरुणंविभोः उपस्थितांऽतिकेतस्मैव्यसनंस्वमवोचत १८ ब्रह्मातदु
पधार्याथसहदेवैस्तयासह जगामसत्रिनयनस्तीरंक्षीरपयोनिधेः १९ तत्रगत्वाजगन्नाथंदेवदेवंवृ
षाकपिं पुरुषंपुरुषसूक्तेनोपतस्थेसमाहितः २० गिरंसमाधौगगनेसमीरितांनिशम्यवेधास्त्रि
दशानुवाचह गांपौरुषींमेशृणुतामराः पुनर्विधीयतामाशुतथैवमाचिरं २१ पुरैवपुंसाऽवधृतो
धराज्वरोभवद्भिरंशैर्यदुषूपजन्यतांसयावदुर्व्याभरमीश्वरेश्वरः स्वकालशक्त्याक्षपयंश्चरेद्भुवि २२
वसुदेवगृहेसाक्षाद्भगवान्पुरुषःपरः जनिष्यतेतत्प्रियार्थंसंभवंतुसुरस्त्रियः २३ वासुदेवक
लानंतः सहस्रवदनः स्वराट् अग्रतोभवितादेवोहरेः प्रियचिकीर्षया २४ ॥ गवतइयंपौरुषीतांगां
वाचंमेमत्तः आशुशृणुत माचिरंअविलंबितंतथैवविधीयतांचेति २१ विज्ञापनात्पुरैवपुंसाईश्वरेणज्वरस्तापः अवधृतोः

१
भा॰ टी॰ देवकीगर्भसंकर्षणायशोदामोहनादिकार्यार्थं यशोदायांसंभविष्यति २५ २६ भोजेंद्रवंधनगारेऽवतारायप्रस्तावकथामाह शूरसे
१० नइत्यादिनायावदध्यायसमाप्ति मथुरामावसन् मथुरायांवसन्विषयान्देशान् २७ २८ सूर्य्ययानवोढयाप्रयाणेप्रयाणार्थः २९ २
३

विष्णोर्माया भगवतीययासंमोहितंजगत् आदिष्टाप्रभुणांशेनकार्यार्थेसंभविष्यति २५ श्रीशुकउ
पतिर वाच इत्यादिश्यामरगणान्प्रजापतिपतिर्विभुः आश्वास्यचमहींगीर्भिःस्वधामपरमंययौ २६ शूरसे
नोयदुपतिर्मथुरामावसन्पुरीं माथुरान्शूरसेनांश्चविषयान्बुभुजेपुरा २७ राजधानीततःसाभू
त्सर्वयादवभूभुजांमथुराभगवान्यत्रनित्यंसन्निहितोहरिः तस्यांतुकर्हिचित्शौरिर्वसुदेवःकृतोद्व
हः देवक्यासूर्यययासार्द्धंप्रयाणेरथमारुहत् २९ उग्रसेनसुतःकंसःस्वसुःप्रियचिकीर्षया रश्मीन्हया
नांजग्राहरौक्मैरथशतैर्वृतः ३० चतुःशतंपारिबर्हंगजानांहेममालिनां अश्वानामयुतंसार्द्धंरथानां
चत्रिषट्शतं ३१ दासीनांसुकुमारीणांद्वेशतेसमलंकृते दुहित्रेदेवकःप्रादात्यानेदुहितृवत्सलः
३२ शंखतूर्यमृदंगाश्चनेदुर्दुंदुभयःसमं प्रयाणप्रक्रमेतावद्वरवध्वोःसुमंगलं ३३ पथिप्रग्रहिणंकंसं
समाभाष्याहाशरीरवाक् अस्यास्त्वामष्टमोगर्भोहंतायांवहसेबुध ३४ इत्युक्तःसखलःपापोभोजा
नांकुलपांसनः भगिनींहंतुमारब्धःखड्गपाणिःकचेऽग्रहीत् ३५ ॥ रश्मीन्प्रग्रहान्अग्रहीत् ३० पारिबर्हंउ
पस्करं ३१ ३२ ३३ आभाष्यंरेरेकंसेतिसंबोध्यहंताहनिष्यति ३४ कुलपांसनःकुलदूषणः आरब्धःउद्युक्तःकचेकेशबंधे ३५ ॥

नृशंसं क्रूरं महाभाग इति अयं भावः स्वजन्मनि हर्षेण देवैरानकदुंदुभिघोषणाद्भाविभगवदवतारेण शक्यप्रतीकारता संभवतीति सां
त्वयन् स्तुत्यात्कृपाविषयत्वेनोपपत्तिभिश्च साममार्गेण संबोधयन् किंच सामभेदाभ्यां संबोधयन् तत्र साम पंचविधं भेदो द्विविधः तदुक्तं
संबंधलाभोपकृतिर्द्वे भेदो गुणकीर्तनं साम पंचविधं भेदो दृष्टादृष्टभयं यथा च तत्र श्लाघनीयगुण इति गुणकीर्तनं भगिनीमिति संबंध
कथनं पुत्रिकोपमेत्यभेदं वक्ष्यति हन्यादिति स्त्रीवधनिरत्यायशोलाभं दर्शयति उद्वाहपर्वणीति संतानहर्ष्योपकारं दर्शयति ३६।३७ म
रणभयेन हन्मीति चेन्न तथापि मरणस्यापरिहरणीयत्वाद्देहांतरस्यावश्यभावित्वात्तत्रापि च भोगप्रेमास्पदत्वादीनामविशेषात्तद्भयेन पा

तं जुगुप्सितकर्माणं नृशंसं निरपत्रपं वसुदेवो महाभाग उवाच परिसांत्वयन् ३६ वसुदेव उवा
च श्लाघनीयगुणः शूरैर्भवान्भोजयशस्करः स कथं भगिनीं हन्यात् स्त्रियमुद्वाहपर्वणि ३७ मृ
त्युर्जन्मवतां वीर देहेन सह जायते अद्य वाब्दशतांते वा मृत्युर्वै प्राणिनां ध्रुवः ३८ देहे पंचत्वमापन्ने
देही कर्मानुगोऽवशः देहांतरमनुप्राप्य प्राक्तनं त्यजते वपुः ३९ व्रजंस्तिष्ठन् पदैकेन यथैवैकेन गच्छति
यथा तृणजलौकैवं देही कर्मगतिं गतः ॥४०॥ पापाचरणमयुक्तमित्यभिप्रेत्याह मृत्युर्जन्मवतामित्यादि देहेन सहेति वि
धात्रा ललाटे लिखितत्वादिति तथापि कालविलंबार्थं हन्मीति चेत्तत्राह अद्य वेति अवश्यंभाविनि मरणे विलंबमात्राय न पापाचर
णं युक्तमिति भावः ३८ किंच अस्मिन् देहे गते यदि देहांतरं न स्यात्तदा युज्येत पापेनापि तत्पालनं न तु तदस्तीत्याह देहे पंचत्वमापन्न इति आ
पन्ने आपन्नप्रायिक मेवशाद्यन्नत एव प्रथमं देहांतरं प्राप्य पश्चात्पूर्वं वपुस्त्यजति ३९ अत्र दृष्टांतः व्रजन्निति एकेनाग्रतो निहिते
न पदा तिष्ठन् ध्रुवमवष्टभ्य देहं बिभ्रत् पश्चादन्येन पूर्वप्रदेशादुत्थाप्य पुरो निहितेन गच्छति तद्वत् अत्र च स्वीकारपरित्यागो नात्यंतं
भिन्नविषयाविति स्पष्टं दृष्टांतांतरमाह यथा तृणांतरमवष्टभ्य पूर्वं तृणं त्यजति एवं कर्मपथे वर्तमानो न्यो जीवोऽपि ॥४०॥ २॥

देहविषयादेवस्वीकारपरित्यागौ दर्शयितुं दृष्टांतांतरमाह स्वप्न इति दृष्टं राजादिदर्शनं श्रुतमिंद्रादिश्रवणं ताभ्यामाहितसंस्कारेण मनसा तदेवानुचिंतयन् ईदृशं जाग्रद्दृष्टश्रुतसदृशं देहं राजादिरूपं किमपि अनिरुक्तं पश्यति यत्क्षणांतरे च तदेवाहमिति प्रपद्यते मन्यते ततश्च जाग्रद्देहादपगतस्मृतिर्भवति पुरुषो यथेति जाग्रत्येव दर्शयितुं दृष्टांतांतरमाह मनोरथेनेति अत्रापि दृष्टश्रुताभ्यामित्यादि सर्वं योज्यं तथा च वक्ष्यति जंतोर्वै कस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः जन्मत्वात्मतया पुंसः सर्वभावेन भूरिद विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसावित्यादि तद्वदत्रापि कर्मवशाद्देहांतरं प्राप्य प्राक्तनं न स्म

स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाऽभिनिविष्टचेतनः दृष्टश्रुताभ्यां मनसाऽनुचिंतयन् प्रपद्यते तत्किमपि ह्यपस्मृतिः ४१ यतो यतो धावति दैवचोदितं मनो विकारात्मकमाप पंचसु गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ४२ ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुगतं विभाव्यते ४३

रतीति ४१ ननु विचित्रदेहहेतूनां कर्मणां कृतत्वाद्देहविशेषप्राप्तौ किं कारणमत आह यतो यत इति देहस्य पंचत्वसमये पंचसु गुणेषु भूतेषु मायारचितेषु मायया नानादेहरूपेण रचितेषु दैवेन फलाभिमुखेन कर्मणा चोदितं नानाविकारात्मकं मनो यं यं देहं देवतिर्य्यगादिरूपं प्रति धावति धावच्च सत् यं यं माप अभिनिवेशेन प्राप्तं तत्र तत्र असौ देही जायते ननु मनसः कर्तृत्वात् तदेव जायतां न त्वकर्तात्मेत्यत आह प्रपद्यमान इति तदेवाहमिति मन्यमानस्तेन सह जायत इति ४२ ननु सत्यं भविष्यत्येव किमपि देहमात्रं तथाप्यऽस्याऽतिप्रियस्य राजदेहस्य रक्षणाय अकृत्यमपि क्रियत इति चेत्तत्राह । ज्योतिरिति अदश्चंद्रादिज्योतिः उदकयुक्तेषु पार्थिवेषु घटादिषु यद्वा उदकेषु पार्थिवेषु तैलघृतादिषु च प्रतिबिंबेन स्थितं समीरस्य वा

एवंस्वाविद्ययारचितेषुगुणेषुदेहेष्वसौरागेणानुगतः प्रविष्टोमुह्यति अभिनि वेशंप्राप्नोति अयंभावः आत्मनस्ताव
देहाद्यध्यासाज्जन्मोक्तं सहतेनजायतइति· ततश्चान्योन्यधर्माध्यासाद्यथादेहादिधर्माः कार्श्यादयः आत्मनिप्रतीयंतेश
वमात्मधर्माः प्रेमास्पदत्वादयोपिदेहादिष्विति राजसूकरदेहयोर्विशेषाभावात् व्यर्थोमृत्युप्रतीकारइति ४३ एवमुक्तंसामो
पायमुपसंहरन् भेदमाह तस्मादिति परतइति अभिद्रुह्यमानात्तत्संबंधिनश्चयमादपिइहामुत्रचभयमितिभेदोदर्शितः

एवंस्वमायारचितेष्वसौपुमान्गुणेषुरागानुगतोविमुह्यति ४३ तस्मान्नकस्यचिद्द्रोहमा
चरेत्सतथाविधः आत्मनः क्षेममन्विच्छन्द्रोग्धुर्वैपरतोभयं ४४ एषातवानुजाबालाकृप
णापुत्रिकोपमाहंतुंनार्हसिकल्याणीमिमांत्वंदीनवत्सल ४५ श्रीशुकउवाच एवंससामा
भिर्भेदैर्बोध्यमानोपिदारुणः नन्यवर्ततकौरव्यपुरुषादाननुव्रतः ४६ निर्बंधंतस्यतंज्ञात्वावि
चिन्त्यानकदुंदुभिः प्राप्तंकालंप्रतिव्योढुमिदंतत्रान्वपद्यत ४७ मृत्युर्बुद्धिमताऽपोह्योयावद्बु
द्धिबलोदयं यद्यसौननिवर्ततनापराधोस्तिदेहिनः ४८ प्रादायमृत्यवेपुत्रान्मोचयेत्कृपणामिमां

४४ पुनः सामैवाह एषेतिपुत्रिकोपमादारुमयीवअचेतनप्राया ४५ बोध्यमानःउपदिश्यमानः स्वयंदारुणः पुनश्च
पुरुषादान्दैत्यान् अनुव्रतः अनुसृतइति ४६ आनकदुंदुभिरिति पदंमहाभागइत्यत्रोक्ताभिप्रायं प्रतिव्योढुंप्रति
तुंवंचयितुमित्यर्थः इदंवक्ष्यमाणमपत्यार्पणं अन्वपद्यतइतिज्ञातवान् ४७ ननुस्वंलोयमेतन्नमन्येतेत्याशंक्यस्वयमेव
विचारयतिमृत्युरिति ४८ तस्मादुपेक्षादोषपरिहारायैवंकरिष्यामीत्याहप्रादायेति मृत्यवेकंसाय ननुइदमपिनैवन्याय्य

१

भा०९० पु० ५

सुताइति अस्यांयदिमेसुताजायेरंस्तदायद्वावितद्भवतुजीवितंतुतावद्भवेदेवतदंतरायचयमेवम्रियेततदानकिंचिदन्याय्यं ४९
यदिचसुताभविष्यंतिनचायंम्रियेततदामत्पुत्रादेवास्यमरणमितिविपर्य्ययोवाकिंनस्यात् ननुप्रौढस्यकंसस्यतवबालकात्क
थंमृत्युःस्यात्तत्राहगतिरिति धातुः अस्यास्त्वामष्टमोगर्भोहंतेत्युक्तवतः अतइदानीमपत्यार्प्पणप्रतिज्ञैवमंत्रःतथासति उप
स्थितोमृत्युरयंतावन्निवर्त्ततेतनिवृत्तःपुनःकालांतरेआपतेच्चेत्तदानापराधोममेत्यर्थः अथवाऽस्यमत्पुत्रादुपस्थितोमृत्युर
स्यावधायोनिवर्त्ततसपुनस्तेनसन्मंत्रेणभवेदेवेति यद्वा गतिर्धातुर्दुरत्ययात्येतस्यप्रपंचःउपस्थितइति ५० प्राणिनामदृष्टं

सुतामेयदिजायेरन्मृत्युर्वानम्रियेतचेत् ४९ विपर्य्ययोवाकिंनस्याद्गतिर्धातुदुरत्यया उ
पस्थितोनिवर्त्तेतनिवृत्तःपुनरापतेत् ५० अग्नेर्यथादारुवियोगयोगयोरदृष्टतोऽन्यन्ननिमित्तमस्ति
एवंहिजंतोरपिदुर्विभाव्यःशरीरसंयोगवियोगहेतुः ५१ एवंविमृश्यतंपापंयावदात्मनिदर्शनंपू
जयामासवैशौरिर्बहुमानपुरःसरं ५२ प्रसन्नवदनांभोजोनृशंसंनिरपत्रपं मनसादूयमाने
नविहसन्निदमब्रवीत् ५३ वसुदेवउवाच नह्यस्मात्तेभयंसौम्ययद्विसाहाऽशरीरवाक् ॥१॥

गमोर

यदुर्वितक्यमितिसदृष्टांतमाह अग्नेरिति वनेवृक्षान्प्रदहन्वह्निःसंनिहितानपिवृक्षानूपरित्यज्यकदाचिद्दूरस्थानपि
दहतियामेगृहान्वा नह्यस्यप्राण्यदृष्टव्यतिरेकेणकिंचिन्नियामकमस्तियथा एवंजंतोर्जन्ममरणयोरपिहेतुदुर्विभाव्यः
अचिंत्यः ५१ यावदात्मनिदर्शनंस्वप्रज्ञावधिविचार्य ५२ तस्यविश्वासायविकसितमुखांभोजःप्रहसन्नब्रवीत् ५३ यत
यथा अशरीरिणीवागाह तथाहिनिश्चितं अस्याःसकाशात्तेभयंनास्ति यतोयेभ्यःपुत्रेभ्यस्तेभयमुत्थितंअष्टमोहंतेत्युक्तं

राम ५

ऽन्योन्यापेक्षयासर्वेष्वप्यषुमाभवेयुरित्युद्भूतानस्याः पुत्रान्समर्प्पयिष्ये ५४ निवर्त्तते निवृत्तः तद्वाक्ये सार उपपत्तिः तद्वित्
५५ प्रसूति काले प्राप्ते सर्वः सर्वात्मा भगवानेव देवतायस्याः सा तथा सर्वदेवतामयीतिवा भगवदाश्रयत्वात् ५६ ५७ मृत्य
वे पुत्रं कथमर्पितवानित्यपेक्षायामाह किं दुःसहमिति साधूनां सत्यसंधानां पुत्रलालनसुखापेक्षाकथं त्यक्तेति अत आह।

पुत्रान्समर्प्पयिष्येऽस्या यतस्ते भयमुत्थितं ५४ श्रीशुक उवाच स्वसुर्वधान्निववृते कंसस्त
द्वाक्यसारवित् वसुदेवोपि तं प्रीतः प्रशस्य प्राविशद्गृहं ५५ अथ काल उपावृत्ते देवकी
सर्वदेवता पुत्रान्प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरं ५६ कीर्तिमंतं प्रथमजं कंसायानकदुंदु
भिः अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ५७ किं दुःसहं नु साधूनां विदुषां किम
पेक्षितं किमकार्यं कदर्याणां दुस्त्यजं किं धृतात्मनां ५८ दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्य
वस्थितिं कंसस्तुष्टमना राजन्प्रहसन्निदमब्रवीत ५९ प्रतियातु कुमारोयं न ह्यस्मादा
स्ति मे भयं अष्टमाद्युवयोर्गर्भान्मृत्युर्मे विहितः किल ६० तथेति सुतमादाय ययावानकदुं
दुभिः नाभ्यनंदत तद्वाक्यमसतोऽविजितात्मनः ६१ नंदाद्या ये व्रजे गोपा याश्चामीषां च योषितः

विदुषामिति भगवानेव तत्वं नान्यदिति जानतामित्यर्थः ननु स्वयं नीते सती कंसो बालं न हन्यात् इति मत्वा नीतवा
निति किं न स्यादिति नेत्याह किमकार्यमिति ननु देवकी कथं पुत्रं तत्याजेत्यत आह दुस्त्यजमिति चित्ते धृत आत्मा ह
रिर्यैस्तेषाम् ५८ ५९ ६० ६१ कंसस्य शांतिर्देवकार्यानुगुणा न भवतीति नारदस्य प्रत्यवस्थानं तदाह ॥ १ ॥ १ ॥

नंदाद्या इत्यादित्रयेण ६२ उभयोर्वसुदेवनंदकुलयोः ६३ वधोद्यमं देवकृतमिति शेषः ६४ ६५ निगडैः शृंखलैः अ
जनो विष्णुस्त्वद्भंकया ६६ ६७ ६८ ६९ इति श्रीपरमानंदसेविश्रीधरस्वामीविरचितायां भावार्थदीपिकायां प्रथमो

वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ६२ सर्वे वै देवताप्राया उभयोरपि भारत ज्ञा
तयो बंधुसुहृदो ये च कंसमनुव्रताः ६३ एतत्कंसाय भगवान्शशंसाभ्येत्य नारदः भू
मेर्भारायमाणानां दैत्यानां च वधोद्यमं ६४ ऋषेर्विनिर्गमे कंसो यदून्मत्वा सुरानिति देव
क्या गर्भसंभूतं विष्णुं च स्ववधं प्रति ६५ देवकीं वसुदेवं च निगृह्य निगडैर्गृहे जातं जात
महन्पुत्रं तयोरजनशंकया ६६ मातरं पितरं भ्रातॄन्सर्वांश्च सुहृदस्तथा घ्नंति ह्यसुतृपो लु
ब्धा राजानः प्रायशो भुवि ६७ आत्मानमिह संजातं जानन्प्राग्विष्णुना हतं महासुरं कालनेमिं
यदुभिः स व्यरुध्यत ६८ उग्रसेनं च पितरं यदुभोजांधकाधिपं स्वयं निगृह्य बुभुजे शूरसेनान्म
हाभुजः ६९ इति श्रीभागवते महापुराणे दशमे प्रथमोऽध्यायः १ श्रीशुक उवाच प्रलंबबकचाणूरतृणा
वर्तमहाशनैः मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः १ अन्यैश्चासुरभूपालैर्बाणभौमादिभि
र्युतः यदूनां कदनं चक्रे बली मागधसंश्रयः २ ॥ध्याय १ द्वितीये कंसघाताय देवकीगर्भगो हरिः ब्रह्मा
दिभिः स्तुतः सांत्वयन्तां निरूप्यते १ यदुभिः स व्यरुध्यते त्युक्तं तमेव विरोधं प्रपंचयति त्वरयादेवकीगर्भस्यान्यत्र संचारेण भगवतः

३ अनुरुंधानाः अनुवर्तमानाः ४ धाम कला तदेव सप्तमो गर्भो बभूव किं तद्धामेत्यत आह यमनंतमिति हर्षशोकवि
वर्द्धनः आनंदरूपस्यावतीर्णत्वाद्धर्षः पूर्वगर्भसाधारणदृष्ट्या च शोक इति ५।६ ननु सा गोकुले किमित्यास्ते अत आह
अन्याश्चेति न केवलं सैव अन्या अपीति विवरेषु अलक्ष्यस्थानेषु ७ जठरे स्थितं ननु गर्भ आकृष्यमाणः कथं जीवेदित्यत आ
ह मामकं धामेति ततः ८ किमर्थमेवं कार्यमित्यत आह अथेति अनंतरमेवेत्यर्थः अंशभागेनेति अंशैः शक्तिभि

ते पीडिता निविविशुः कुरुपांचालकेकयान् शाल्वान्विदर्भान्निषधान्विदेहान्कोशला
नपि ३ एके तमनुरुंधाना ज्ञातयः पर्युपासते हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ४
सप्तमो वैष्णवं धाम यमनंतं प्रचक्षते गर्भो बभूव देवक्या हर्षशोकविवर्द्धनः ५ भगवानपि
विश्वात्मा विदित्वा कंसजं भयं यदूनां निजनाथानां योगमायां समादिशत् ६ गच्छ देवि व्र
जं भद्रे गोपगोभिरलंकृतं रोहिणी वसुदेवस्य भार्यास्ते नंदगोकुले अन्याश्च कंससंविग्ना
विवरेषु वसंति हि ७ देवक्या जठरे गर्भं शेषाख्यं धाम मामकं तत्संनिकृष्य रोहिण्या उद
रे संनिवेशय ८ अथाहमंशभागेन देवक्याः पुत्रतां शुभे ॥ ९ ॥ भजते अधितिष्ठति सर्वा

न्ब्रह्मादिस्तंभपर्यंतानित्यंशभागस्तेन परिपूर्णेन रूपेणेत्यर्थः यद्वा अंशैर्ज्ञानैश्वर्य्यबलादिभिर्भाजयति योजयति
स्वीयानिति तथा तेनेति यद्वा अंशेन पुरुषरूपेण मायया भागो भजनं ईक्षणं यस्य तेन यद्वा अंशेन मायया गुणावतारा दि
रूपाः भागा भेदा यस्य तेन यद्वा अंशा एव मत्स्यकूर्मादिरूपा भजनीयाः न तु साक्षात्स्वरूपं यस्य तेन यद्वा अंशैर्ज्ञानबलादिभिर्भे

अनुवर्तनं भक्तेषु यस्य तेन यद्वा अंशा महदादयः तेषां भागः शुद्धसत्वांशस्तेन सर्वथा परिपूर्णेन रूपेणेति विवक्षितं ७ स तु भगवा
न् स्वयमित्युक्तत्वात् इति तां प्रोत्साहयति त्वं यशोदायामिति सार्द्धचतुष्टयेन ९ सर्वान् पुत्रादीन् कामयंते ये तेषां वरां ईश्वरी ॥
श्रेष्ठा नियंत्री अर्चकानां सर्वान् कामवरान् प्रददातीति या तां १० ११ १२ त्वद्विक्रमेण च तस्य व्यपदेशा भविष्यंतीत्याह गर्भसंकर्ष

प्राप्स्यामि त्वं यशोदायां नंदपत्न्यां भविष्यसि ९ अर्चिष्यंति मनुष्यास्त्वां सर्वकामवरेश्वरीं
धूपोपहारबलिभिः सर्वकामवरप्रदां १० नामधेयानि कुर्वंति स्थानानि च नरा भुवि दुर्गेति
भद्रकालीति विजया वैष्णवीति च ११ कुमुदा चंडिका कृष्णा माधवी कन्यकेति च माया नाराय
णीशानी शारदेत्यंबिकेति च १२ गर्भसंकर्षणात्तं वै प्राहुः संकर्षणं भुवि रामेति लोकरमणाद्ब
लं बलवदुच्छ्रयात् १३ संदिष्टैवं भगवता तथेत्योमिति तद्वचः प्रतिगृह्य परिक्रम्य गां गता त
त्तथाकरोत् १४ गर्भे प्रणीते देवक्या रोहिणीं योगनिद्रया अहो विस्रंसितो गर्भ इति पौरा वि
चुक्रुशुः १५ भगवानपि विश्वात्मा भक्तानामभयंकरः आविवेशांशभागेन मन आनक
दुंदुभेः १६ स बिभ्रत्पौरुषं धाम राजमानो यथा रविः दुरासदोऽतिदुर्द्धर्षो भूतानां संबभूव ह १७
ततो जगन्मंगलमच्युतांशं समाहितं शूरसुतेन देवी ॥ णादित्यादिना रामेति च संबोधनं करिष्यंतीत्यया संक
र्षेन लोकस्य रमणात् रत्युत्पादनात् १३ तथेति पुनरपि ओमित्यादरेण प्रतिगृह्य गां पृथ्वीं १४ विस्रंसितः विभ्रष्टः विलसत्वित्य
र्थः इति विचुक्रुशुः न तु तद्विदुरित्यर्थः १५ मन आविवेश मनस्याविर्बभूव जीवानामिव न धातुसंबंध इत्यर्थः १६ धाम श्रीमूर्तिं १७ ७

अच्युतांशं अच्युता च्युतिरहिता अंशा ऐश्वर्यादयो यस्य तं यद्वा अच्युतस्य अंश एवांशो भक्तानामनुग्रहार्थं परिछिन्नवपु रित्यर्थः समाहितं सम्यक् भूतमेवाहितं वैधदीक्षया अर्पितं देवी द्योतमाना शुद्धसत्वेत्यर्थः सर्वात्मकं सर्वस्यात्मानं अतएवा त्मभूतं स्वस्मिन्नादावेव संतं मनस्तः मनसैव दधार धारणया धृतवती अत्रानुरूपं दृष्टांतमाह यथा काष्ठा प्राचीदिक् आनं दकरं चंद्रमिति १८ सर्वजगन्निवासस्य श्रीहरेर्निवासभूता सत्यपि नितरां सर्वजनाल्हादकतया न रेजे किंतु स्वयमेवानंदमा न्वभवत् यतः कंसस्य गृहे रुद्धा अन्यैर्न दृश्यते घटादिषु रुध्दा अग्निशिखा दीपकलिका इव तथा सती शोभमाना सरस्वती ज्ञा

दधार सर्वात्मकमात्मभूतं काष्ठा यथानंदकरं मनस्तः १८ सा देवकी सर्वजगन्निवासनि वासभूता नितरां न रेजे भोजेंद्रगेहेऽग्निशिखेव रुद्धा सरस्वती ज्ञानखले यथा सती १९ तां वी क्ष्य कंसः प्रभयाऽजितांतरां विरोचयंतीं भवनं शुचिस्मितां आहैष मे प्राणहरो हरिर्गुहां ध्रुवं श्रि तो यन्न पुरेयमीदृशी २० किमद्य तस्मिन्करणीयमाशु मे यदर्थतंत्रो न विहंति विक्रमं स्त्रियाः स्वसुर्गुरुमत्या वधोऽयं यशः श्रियं हंत्यनुकालमायुः २१ ॥ न खले ज्ञानवंचके रुद्धा यथान्येषामनुपकारि णी न राजते तद्वत् १९ प्रभया भवनं विरोचयंतीं तां अजितः अंतरा कुक्षिमध्ये यस्याः सा तां एषः विरोचमानः ध्रुवं हरिरेव य तः यस्मात् ईदृशी इयं पुरा पूर्वं नासीत् २० ननु संतिसामादय उपायाः नेति स्वयमेवाह अयमर्थतंत्रो देवकार्य्यप्रधानः विक्र मं न विहंति मद्वधे पराक्रमं करिष्यत्येवेत्यर्थः यद्वा तर्हि इयमिदानीमेव हन्यतामिति विचिंत्याह अर्थतंत्रोऽपि पुमान् स्वविक्रमं न विहंति न नाशयति स्त्रीवधे तन्नाशः स्यादिति भावः तदेवाह स्त्रियाः इति गुरुमत्या गुर्विण्याः २१ ॥ ६ ॥ ७ ॥ ६ ॥ ७ ॥

भा० द० पू० ८

किंचसएवजीवन्नपिमृतः स्यात्नृशंसहितेनक्रौर्येणयोवर्तेततंजीवंतमेवमनुजाः शपंतिदुर्वाक्यैर्धिक्कुर्वंतिसचदेहेमृतेतनु
मानिनः पापिनोनरकंगच्छेति अथवाशापप्रकारमेवाह तनुमानिनोस्यदेहेमृतेयंध्रुवमंधंतमोगमिष्यतीति २२ सं
विशन्शयानः २४ रम्याभिर्गीर्भिः वृषणंकामवर्षिणंईडयन् तुष्टुवुः २५ प्रतिश्रुतंसत्यंकृतमितिहृष्टाः संतः सत्यत्वेनैवप्र
थमंस्तुवंति सत्यव्रतमिति सत्यंव्रतंसंकल्पोयस्यतं सत्यप्रतिज्ञमित्यर्थः सत्यंपरंश्रेष्ठंप्राप्तिसाधनंयस्मिन्तंत्रिसत्यंत्रिष्वपि
कालेषुसृष्टेः पूर्वंप्रलयानंतरंचस्थितिसमयेचसत्यंअव्यभिचारेणवर्तमानंतदेवाहुःसत्यस्ययोनिमितिसच्छब्देनपृथिव्यप्तेजां

सएषजीवन्खलुसंपरेतोवर्तेतयोऽत्यंतनृशंसितेन देहेमृतेतंमनुजाः शपंतिगंतातमोंऽ।
धंतनुमानिनोध्रुवं २२ इतिघोरतमाद्भावात्संनिवृत्तः स्वयंप्रभुः आस्तेप्रतीक्षंस्तज्जन्महै
रेरानुबंधकृत २३ आसीनः संविशंस्तिष्ठन् भुंजानः पर्यटन्महीं चिंतयानोहृषीकेशम
पश्यत्तन्मयंजगत २४ ब्रह्माभवश्चतत्रैत्यमुनिभिर्नारदादिभिः देवैः सानुचरैःसाकंगीर्भिर्वृ
षणमैडयन् २५ सत्यव्रतंसत्यपरंत्रिसत्यंसत्यस्ययोनिंनिहितंचसत्ये॥ २ ॥ २ ॥ २ ॥

सित्यच्छब्देनवाय्वाकाशौएवंसच्चत्यच्चसत्यंभूतपंचकंतत्सत्यमित्याचक्षतइतिश्रुतेः तस्ययोनिंकारणं अने
नभूतपंचकात्पूर्ववर्तमानतोक्ता तथासत्येतस्मिन्नेवनिहितंअंतर्यामितयास्थितं अनेनस्थितिसमये।
पिसत्यत्वमुक्तं तथासत्यस्यसत्यंतस्यैवसत्यस्यसत्यंपारमार्थिकंतन्नाशेप्प वशिष्यमाणरूपं अनेनप्रलये।
प्यवधित्वेनसत्यत्वंदर्शितं एवंत्रिसत्यत्वमुपपादितं तथा ऋतसत्यनेत्रंऋतंचसूनृतावाणीसत्यंचसमदर्शनं

तथाभगवताव्याख्यास्यमानत्वात्सत्यंचसमदर्शनं ऋतंचसूनृतावाणीकविभिः परिकीर्त्तितेति तयोर्न्नेत्रं नयनसाधनं
नेतारंप्रवर्तकमितियावत् एवंसर्वप्रकारेणसत्यात्मकंत्वांभगवन्वयंशरणंप्रपन्नाः प्राप्ताइति २६ ननुभवंतोऽपिलोके
श्वरामत्तुल्या एवकिमितिमांशरणंप्रपद्यंतेनैवंवाच्यंत्वमेवैकः सर्वेश्वरः सर्गस्थ्यादिकारणत्वात्वयंतुत्वदेकशरणाए
वलोकादिरूपंद्वैतंचसर्वंत्वद्व्यतिरेकेणनास्तीतिवक्तुंद्वैतप्रपंचंवृक्षरूपकेणनिरूपयंति एकायनइति असौप्रपंचआ
दिवृक्षः वृश्च्यतइतिवृक्षः समष्टिव्यष्टिदेहरूपः कथंभूतः एकायनएकाप्रकृतिरयनमाश्रयोयस्यसः द्वेसुखदुःखेफ
लेयस्यसः त्रयोगुणामूलानियस्यसः धर्म्मार्थकाममोक्षाश्चत्वारोरसायस्यसः पंचइंद्रियाणिविधाज्ञानप्रकाराएयस्यसः।

सत्यस्यसत्यंऋतसत्यनेत्रंसत्यात्मकंत्वांशरणंप्रपन्नाः २६ एकायनोऽसौद्विफल।
स्त्रिमूलश्चतूरसः पंचविधः षडात्मा सप्तत्वगष्टविटपोनवाक्षोदशच्छदीद्विखगोह्या
दिवृक्षः २७ त्वमेकएवाऽस्यसतः प्रसूतिस्त्वंसंनिधानंत्वमनुग्रहश्च ऊँ क्षुत्पिपासेशोकमो
होजरामृत्यूरेताः षडूर्मयः षट्ऊर्म्मयः कोशावाआत्मानः स्वभावायस्यसः त्वग्मांसरुधिरस्नायुशुक्रास्थिमज्जासप्तधात
वः त्वचोयस्यसपंचभूतानिमनोबुद्धिरहंकारश्चेत्यष्टौविटपाः शाखाविस्तारायस्यसः नवद्वाराणिअक्षाः छिद्राणियस्यसः
प्राणाऽपानसमानोदानव्याननागकूर्मकृकलदेवदत्तधनंजयः दशप्राणाः छदाः पत्राणिविद्यंतेयस्यसः दशच्छदीद्वौजीवे
श्वरौखगौपक्षिणौयस्मिन्सद्विखगः २७ एवंरूपस्यसंसारवृक्षस्यसतः कार्य्यस्यत्वमेकएवप्रसूतिःप्रकर्षेणसूतिर्जन्मय
स्मात्सः त्वंकारणमित्यर्थः त्वमेवसन्निधानंसम्यक्निधीयतेऽस्मिन्नितिलयस्थानंत्वमेवानुग्रहश्च अनुगृह्णातीति
पालकः ननुब्रह्मविष्णुरुद्राएवंभूताः प्रसिद्धाः कथमहमितिचेत्तत्राहुः त्वन्माययेतिसंवृतं॥२॥

भा०द०
पू०
९

पिहितं चेतो ज्ञानं येषां ते त्वामेव नाना पश्यंति ये तु विपश्चितो विद्वांसः ते तथा न पश्यंति २८ ननु देवकीपुत्रे त्वयि कथमेवं वर्ण्यते यथे
ति चेत्तत्राहुः विभर्षीति अवबोधैकस्वरूप आत्मा त्वमेव रूपाणि मूर्तीर्विभर्षि धत्से न तु त्वं कस्यापि पुत्र इत्यर्थः क्षेमाय पाल
नाय सतां धर्मवर्तिनां सुखकराणि खलानामभद्राणि नाशकानि २९ न केवलमेतावत् भक्तानां मोक्षार्थमपीत्याहुः त्वयीति
त्वयि समाधिना आवेशितचेतसा निमितेन त्वत्पादपोतेन आश्रितेन एके मुख्या विवेकिनः महद्भिः कृतेन सेव्यतया संपादितेन
यद्वा इदमपि मायामयमित्यनादरं परित्यज्य इदमेव महत्सर्वोत्कृष्टमिति मन्यमानेन वा गुणभूतेनेत्यर्थः भवाब्धिं तुच्छं कुर्वं
महाहोगण

त्वय्यंबुजाक्षाखिलसत्वधाम्नि समाधिनावेशितचेतसैके त्वत्पादपोतेन महत्कृतेन कुर्वंति गोवत्सपदं भवाब्धिं ३०

त्वन्मायया संवृतचेतसस्त्वां पश्यंति नाना न विपश्चितो ये २८ विभर्षि रूपाण्यवबोध आत्मा क्षेमाय लोकस्य चराचरस्य सत्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानां २९ त्वय्यंबुजाक्षाखिलसत्वधाम्नि समाधिनावेशितचेतसैके त्वत्पादपोतेन महत्कृतेन कुर्वंति गोवत्सपदं भवाब्धिं ३० स्वयं समुत्तीर्य सुदुस्तरं द्युमन् भवार्णवं भीममदभ्रसौहृदाः ॥६॥

ति अनायासेनैव भजनानुनिष्ठ्यादिनीति षां मुक्तिरित्यर्थः ३० ननु तेन पोतेन चेत् पूर्वे पारंगताः तर्हि इदानींतनानां
का गतिस्तत्राहुः स्वयमिति अयमर्थः हे द्युमन् स्वप्रकाश त्वत्पादपोतसामीप्यमात्रेण भवांबुधौ वत्सपदमात्रे जाते
अतस्तस्मिन्निरपेक्षं स्वयमेवान्येषां भीमं दुस्तरमपि भवार्णवं समुत्तीर्य भवत्पदांभोरुहरूपां नावं अत्रैव निधाय भक्ति
मार्गसंप्रदायं प्रवर्त्येत्यर्थः पारं यातास्तत् कियतः अदभ्रसौहृदाः सर्वभूतेष्वतिप्रीतियुक्ताः अतस्तेऽन्येषां त
रणाय निधायेति कथं मत्या दाश्रयणमात्रेण तीर्णा ॥

अतउक्तंभवान्सदनुग्रहः सतोभक्तानेवानुगृह्णातीति ३१ ननुविवेकिनांकिंमद्भजनेनमुक्ताएवहितेतत्राहुः येन्यइतिविमुक्तमा
निनः विमुक्तावयमितिमन्यमानाः त्वयिअस्तोनिरस्तोअतएवासन्योभावः तस्माद्भक्तेरभावादित्यर्थः नविशुद्धाबुद्धिर्येषांतेतन
या यद्वात्वयिअस्तभाः इतिछेदः अस्तमतयः वादेष्वेवविशुद्धबुद्धयः कृच्छ्रेणबहुजन्मतपसापरंपदंमोक्षसन्निहितंसत्कुलतपः
श्रुतादिआरुह्यततः पतंतिविघ्नैरभिभूयंते नआदृतौयुष्मदंघ्रीयैस्ते ३२ त्वदीयास्तुनकदाचिदपिपतंतीत्याहुः तथानेति वि
नायकाविघ्नहेतवस्तेषामनीकानिसैन्यानितानिपांतियेतेषांमूर्द्धसुविचरंतिविघ्नान्जयंतीत्यर्थः ३३ सतांसुखावहानिरूपा

भवत्पदांभोरुहनावमत्रतेनिधाययाताः सदनुग्रहोभवान् ३१ येन्येरविंदाक्षविमुक्तमानिन
स्त्वय्यस्तभावादविशुद्धबुद्धयः आरुह्यकृच्छ्रेणपरंपदंततः पतंत्यधोऽनादृतयुष्मदंघ्रयः ३२
तथानतेमाधवतावकाः क्वचिद्भ्रश्यंतिमार्गात्त्वयिबद्धसौहृदाः त्वयाभिगुप्ताविचरंतिनि
र्भयाविनायकानीकपमूर्द्धसुप्रभो ३३ सत्वंविशुद्धंश्रयतेभवान्स्थितौशरीरिणांश्रेयउपाय
नंवपुः वेदक्रियायोगतपःसमाधिभिस्तवार्हणंयेनजनः [illegible] ३४ सत्वंनचेद्धातरिदंनि

णिधारयसीत्युक्तं विभर्षिरूपाणीतितत्केनप्रकारेणसुखावहत्वमित्य ऽऽ जंभवेद्विज्ञानमज्ञानभिदापमार्जनं
पेक्षायामाहुः सत्वंविशुद्धमिति सत्ववपुःश्रयतइत्यन्वयः श्रेयउपायनंकर्मफलदातृकथंयेनवपुषाजनस्तवार्हणंपूजा
मीहतेकरोति कैः वेदाश्चक्रियायोगाश्चतपश्चसमाधिश्चतैः चतुराश्रमधर्मैरित्यर्थः वपुषोऽनाश्रयणेऽर्हणासंभवात् नकर्म
फलसिद्धिःस्यादिति ३४ त्वय्यंबुजाक्षेत्यादिनाश्लोकत्रयेणभगवद्भक्तानामेवमोक्षोनान्येषामित्युक्तंतत्रकर्मफलंभक्तिं।

विज्ञमाभून्मोक्षस्यतुज्ञानैकसाध्यत्वात्किंभक्तेपिसानुशयानप्रत्याहुः सत्वंनचेदिति हेधातः३४ इदंसत्वंनिजंतववपुर्नभवेच्चेत्तर्हिविज्ञानंविशिष्टमपरोक्षज्ञानंनभवेत्क्वियनुषंगः कथंभूतंअज्ञानभिदापमार्जनं अज्ञानंचनतत्कृताभिदाचतयोरपमार्जनंनिवर्तकं यद्वाअज्ञानंभिनत्तीत्यज्ञानभित्विज्ञानंमार्जनंनाशंआपप्राप्नमेवेति ननुजडानांवुध्यादीनांयतः प्रकाशस्तद्ब्रह्मेतिज्ञानंभवेदेवेतिचेन्नगुणप्रकाशैः गुणावच्छिन्नैः प्रकाशैर्भवान्सर्वसाक्षीपूर्णः केवलमनुमीयतेकस्मिंतनतुसाक्षात्क्रियतइत्यर्थः अनुमानप्रकारमाहुः प्रकाशतेयस्यचयेनवागुणइति यस्यसंबंधीअयंबुध्यादिगुणः प्रकाशते योगुणसाक्षीत्येवंयेनवाबुध्याद्यारूढेनप्रमात्रावुध्याधिष्ठात्रात्मनागुणः प्रकाशतेइत्यनुमीयतइत्यर्थः

गुणप्रकाशैरनुमीयतेभवान्प्रकाशतेयस्यचयेनवागुणः ३५ ननामरूपेगुणजन्मकर्मभिर्निरूपितव्येतवतस्यसाक्षिणः मनोवचोभ्यामनुमेयवर्त्मनोदेवक्रियायांप्रतियंत्यथापिहि ३६ शृण्वनगृणन्संस्मरयंश्चचिंतयन्नामानिरूपाणिचमंगलानिते ॥

शुद्धसत्ववपुषित्वयिसेव्यमानेतुतदाकारोतःकरणेत्वत्प्रसादेनसाक्षात्कारोभवेदितिभावः ३५ एवंतावद्भक्तानामभ्युदयापवर्गार्थंरूपाणिबिभर्षीत्युक्तंतान्यपिभजनीयानिकेवलंनतुज्ञातुंशक्यंते अनंतत्वादतर्क्यत्वाच्चमनोवचसोरगोचरत्वादित्याहुः ननामरूपेइति गुणाश्चजन्मानिचकर्माणिचतैर्निरूपितव्येनिरूपणार्हेनभवतः कुतः अनुमेयंवर्त्ममार्गोयस्यतवेति तत्रापिहेतुः तस्यसाक्षिणइति नहिसाक्षिणस्तत्वंमनोवचोगोचरंइत्यर्थः हेदेवबहुधाद्योतमानअथापिक्रियायांउपासनादिलक्षणायांत्वांप्रतियंत्युपासकाः साक्षात्पश्यंतिहिप्रसिद्धम ३६ तस्माद्भक्त्यैवमोक्षइत्युपसंहरंतिशृण्वन्निति ॥

अन्यानपिसंस्मारयन्क्रियासुदेवार्चादिकर्मसु ३७ विशेषतः श्रीकृष्णावतारमभिनंदंति दिष्ट्याभद्रंतवपदःपाद
भूतायाः ईश्वरस्यतवजन्ममात्रेणअपनीतएवकिंचत्वत्पदकैः कोमलैः पादैः सुशोभनैः वज्रांकुशादिशुभलक्षणैः गांपृ
थ्वीद्यांस्वर्गंचतवत्वयानुकंपितां ३८ तवजन्मनाभारोऽपनीतइत्युक्तयाममापिकिंजीववत्संसारउक्तः नहिनहीत्याहुः नेति
वतहेईशात्वसंसारिणस्तेजन्मनः कारणंक्रीडांविनानतर्कयामः किंचहेऽभयाश्रयनभयंश्राश्रयतइतितथानत्संबो

क्रियासुयस्त्वच्चरणारविंदयोराविष्टचित्तोनभवायकल्पते ३७ दिष्ट्याहरेऽस्याभवतः
पदोभुवोभारोऽपनीतस्तवजन्मनेशितुः दिष्ट्यांकितांत्वत्पदकैःसुशोभनैर्द्रक्ष्यामगांद्यां
चतवानुकंपितां ३८ नतेऽभवस्येशभवस्यकारणंविनाविनोदंवततर्कयामहे भवोनिरो
धःस्थितिरप्यविद्ययाकृतायतस्त्वय्यभयाश्रयात्मनि ३९ मत्स्याऽश्वकच्छपवराहनृ
सिंहहंसराजन्यविप्रविबुधेषुकृतावतारः त्वंपासिनस्त्रिभुवनंचयथाधुनेशभारंभुवो
हरयदूत्तमवंदनंते ४० दिष्ट्याऽंवतेकुक्षिगतःपरःपुमानंशेनसाक्षाद्भगवान्भवायनः
माभूद्भयंभोजपतेर्मुमूर्षोर्गोप्तायदूनांभवितातवात्मजः ४१ श्रीशुकउवाच ॥ १ ॥

धनंहेनित्यमुक्तेत्यर्थः तवजन्मकारणंनास्तीतिकिंवक्तव्यंयतोजीवात्मन्यपिभवादयस्त्वद्विषयेयाऽविद्यात
याकृताः नपरमार्थतःसंतीति ३९ प्रस्तुतंप्रार्थयंते मत्स्याश्वेतिनः अस्मान्त्रिभुवनंचअन्यदायथापासितथाधुनापि
पाहीतिवंदनंतेइतिवदंतः सर्वेशिरोभिःप्रणमंति ४० देवकींप्रत्याहुः दिष्ट्येतिनोस्माकंभवायउद्भवायसाक्षात्परःपुमांस्तेकु

२
भा०द०
पू०
११

यस्य रूपमनिर्देश्यं सर्वं सत्यम्भूतं यथा यथावत् अस्मान् चयित्वा एतावेि हस्थास्यत इति मन्यमाना ब्रह्मेशानौ पुरोधाय पुरतः कृ
त्वा यपुरिति ४२ इति श्री दशमे द्वितीयोध्यायः २ ततोयेनिजरूपेण संभूतस्तु हरिः स्वयं पितृभ्यां संस्तुतो नीतः पित्राभीते
नमोकुल १ अथेति मंगलार्थं यर्हि सर्वगुणोपेतः कालो बभूव तदा देवक्यां विष्णुराविरासीदित्यष्टम श्लोकगतेनान्वयः
परमशोभनत्वमेवाह यर्हीत्यादिना अजनाना रायण जन्मयस्य प्रजापतेस्तस्य ऋक्षं रोहिणी नक्षत्रं कथंभूतं शांतानि ग्र

इत्यभिष्टूय पुरुषं यद्रूपमनिदं यथा ब्रह्मेशानौ पुरोधाय देवाः प्रतिययुर्दिवं ४२ इति
श्रीभागवते महापुराणे दशमस्कंधे गर्भगतविष्णोर्ब्रह्मादिकृतस्तुतिर्नाम द्वितीयोऽध्यायः
॥२॥ श्रीशुक उवाच अथ सर्वगुणोपेतः कालः परमशोभनः यर्ह्येवाजनजन्मर्क्षं शांत
र्क्षग्रहतारकं १ दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयं मही मंगलभूयिष्ठपुरग्रामव्रजा
करा २ नद्यः प्रसन्नसलिला ह्रदा जलरुहश्रियः द्विजालिकुलसन्नादस्तवका वनराजयः
३ ववौ वायुः सुखस्पर्शः पुण्यगंधवहः शुचिः अग्नयश्च द्विजातीनां शांतास्तत्र समिंधत
४ मनांस्यासन्प्रसन्नानि साधूनामसुरद्रुहां जायमानेऽजने तस्मिन्ने दुर्दुंदुभयो दिवि ५॥

क्षाणि अश्विन्यादीनि ग्रहाश्च तारकाश्च यस्मिन् ततयर्हीति सर्वत्रानुषज्यते १ निर्मलानामुडुगणानामुदयो यस्मि
न तत्तथा मंगलभूयिष्ठाः पुरादयो यस्यां सा २ जलरुहैः श्रीः शोभा येषां ते द्विजालिकुलानां सन्नादा येषु ते स्तवका यासु
ताः ३ समिंधत आडागमो दृष्टव्यः समैधतेति सम्यग्दीप्ता बभूवुरित्यर्थः ४ असुरद्रुहां कंसादिव्यतिरिक्तानां सर्वप्राणिनां दे
वानां चेति स्वर्गे तु विशेषमाह जायमान इति अजने जायमाने ५॥ ६ ॥ ६॥

तदा आसन्नः प्रसवो यस्मिन् तस्मिन् समये इत्यर्थः ६।७ तमसा उद्भूते घनतमसि निशीथे यथा यथावत् ऐश्वर्येणैव रूपेण ८
तमद्भुतं बालकं वसुदेव ऐक्षतेति द्वितीयश्लोकस्थेनान्वयः अद्भुतत्वे हेतुगर्भाणि विशेषणानि अम्बुजेक्षणमित्यादीनि श्रीवत्स
लक्ष्मम् श्रीवत्सलक्ष्माणं गलेन शोभते इति गलशोभी सः कौस्तुभो यस्मिन् ९ परिष्वक्तसहस्रकुंतलं किरीटकुंडलादीनां त्विषा स्फु

जगुः किन्नरगंधर्वास्तुष्टुवुः सिद्धचारणाः विद्याधर्यश्च ननृतुरप्सरोभिः समं तदा ६ मुमुचु
र्मुनयो देवाः सुमनांसि मुदान्विताः मंदं मंदं जलधरा जगर्जुरनुसागरं ७ निशीथे तम उ
द्भूते जायमाने जनार्दने देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः आविरासीद्यथा प्राच्यां
दिशींदुरिव पुष्कलः ८ तमद्भुतं बालकमंबुजेक्षणं चतुर्भुजं शंखगदाद्युदायुधं श्रीव
त्सलक्ष्मं गलशोभि कौस्तुभं पीतांबरं सांद्रपयोदसौभगं ९ महार्हवैडूर्य्यकिरीटकुंडलत्वि
षा परिष्वक्तसहस्रकुंतलं उद्दामकांच्यंगदकंकणादिभिर्विरोचमानं वसुदेव ऐक्षत १०
स विस्मयोत्फुल्लविलोचनो हरिं सुतं विलोक्यानकदुंदुभिस्तदा कृष्णावतारोत्सवसंभ्रमो
ऽस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवां ११ अथैनमस्तौदवधार्य पूरुषं परं नतांगः कृ
तधीः कृतांजलिः स्वरोचिषा भारत सूतिकागृहं विरोचयंतं गतभीः प्रभाववित् ॥ १२ ॥

रद्धपरिमितकेशमित्यर्थः १० विस्मयेन उत्फुल्ले विशिष्टे लोचने यस्य सः गवामयुतमस्पृशत् मनसा दत्तवान् कंसनि
गृहीतस्य दानासंभवात् स्पर्शे हेतुः कृष्णावतारेति मुदा आप्लुतो व्याप्तः स्नात इति वा ११ कृतधीः शुद्धबुद्धिः १२ ॥ ६ ॥

भा॰ द॰ १ २

प्रथमं पुत्रबुध्या पश्यन् वसुदेवः तां पुत्रबुद्धिं परित्यज्याह अहो विदितोसीति कथं विदितोसि भवान् प्रकृतेः परः पुरुष इति ननु किमत्राश्चर्य्यं पुरुषस्य प्रकृतेरन्यत्वादेवेति तत्राह साक्षादिति प्रत्यक्षत इत्यर्थः नन्वक्षिसंनिकृष्टं प्रत्यक्षत उपलभ्य तत्किं चित्रमित्यत आह केवलेति केवलश्चासावनुभवश्च आनंदश्च तदेव स्वरूपं यस्य सः किंच सर्वबुद्धिदृक् नह्येवंभूतो दृश्यो भवतीत्यर्थः १३ ननु देवकीजठरे प्रविष्टस्य किमियमतिस्तुतिः क्रियते अत आह स एवेति स एव उक्तस्वरूप एव त्वं न देवकीजठरे प्रविष्ट इत्यर्थः ननु विश्वं सृष्ट्वा तदनुप्रविष्टस्य किमेतद्वक्तुं अत आह स्वप्रकृत्येति स्वमायया सृष्ट्वा तदनु त्वमप्रविष्ट एवेति ननु क

वसुदेव उवाच विदितोसि भवान् साक्षात्पुरुषः प्रकृतेः परः केवलानुभवानंदस्वरूपः सर्वबुद्धिदृक् १३ स एव स्वप्रकृत्येदं सृष्ट्वाऽग्रे त्रिगुणात्मकं तदनु त्वं ह्यऽप्रविष्टः प्रविष्ट इव भाव्यसे १४ यथेमेऽविकृता भावास्तथा ते विकृतैः सह नानावीर्याः पृथग्भूता विराजं जनयंति हि १५ सन्निपत्य समुत्पाद्य दृश्यंतेऽनुगता इव प्रागेव विद्यमानत्वान्न तेषामिह संभवः १६

थं तर्हि श्रुत्योच्यते तत्सृष्ट्वा तदेवानुप्राविशदिति अत आह प्रविष्ट इवेति भाव्यसे निरूप्यसे प्रत्यक्षतो वा सद्रूपेण वाप्रविष्ट इव लक्ष्यसे १४ अत्र दृष्टांतः यथेति इमेऽविकृता भावा महदादयो यथा तथेति दृष्टांतं विवृणोति ते विकृतैरिति षोडशविकारैः सह संनिपत्य विराजं जनयंतीति सन्निपतने हेतुः यतः पृथग्भूताः संतो नानावीर्य्याः विशिष्टकार्य्यसमर्थो न भवंति १५ अतः सन्निपत्येति एवं समुत्पाद्यानुगताः प्रविष्टा इव दृश्यंते न पुनः प्रविष्टाः कुतः उत्पत्तेः प्रागेव कारणतया विद्यमानत्वात् न तेषामिह सृष्टकार्य्ये पश्चात्संभवः प्रवेश इति ॥ १६ ॥ ॥ ॥ ॥ ॥ ॥ ॥

दार्ष्टांतिकेऽतिदिशति एवंभवानिति ननुयद्यहमप्रसूतस्वरूपएवकारणतयाकार्येषुवर्तेतर्हितेष्विंद्रियैर्गृह्यमाणेषुमम
ग्रहणंकिन्नास्तितत्राह बुद्ध्यनुमेयलक्षणैरिति बुद्ध्यारूपादिज्ञानेनानुमेयंलक्षणंस्वरूपंएषांतैर्गुणैरिंद्रियैर्ग्राह्यैर्गुणैःस
हसन्नपिवर्तमानोपितद्गुणाग्रहस्तैर्गुणैःसहनगृह्यसे अयंभावः नहिग्राह्यैःसहभावमात्रंग्रहणेकारणंकिंत्विंद्रियाणांश
क्तिःसाचकार्यैकसमधिगम्यायथाकार्यमेवकल्प्यतेअतोयथाचक्षुषारूपग्रहणेरसादिग्रहणंनास्तितथैवविषयग्रहणे
त्वद्ग्रहणमपीति अविषयत्वेनचग्रहणाऽनर्हत्वमुक्तमेव सर्वबुद्धिदृगित्यत्र एवंतावत्प्रागेवविद्यमानत्वात्प्रवेशोनास्तीत्युक्तं
किंचपरिच्छिन्नस्यनीडेपक्ष्यादेरिवप्रवेशोभवेत् तवत्वनावृतत्वादपरिच्छिन्नत्वेनबहिरंतरभेदोनास्तिकुतःप्रवेशइत्याह अ

एवंभवान्बुद्ध्यनुमेयलक्षणैर्ग्राह्यैर्गुणैःसन्नपितद्गुणाग्रहः अनावृतत्वाद्बहिरंतरंनतेस
र्वस्यसर्वात्मनआत्मवस्तुनः १७ यआत्मनोदृश्यगुणेषुसन्नितिव्यवस्यतेस्वव्यतिरेकतोऽबुधः

नावृतत्वादिति अनावृतत्वेहेतुमाह सर्वस्येति नहिसर्वस्वरूपस्यान्यदावरकमस्तिसर्वात्मनः नह्येकेनावृतोन्यस्या
त्माभवेत् आत्मवस्तुनइतिआत्मनोवस्तुनश्चेतिहेतुद्वयं अततसाततत्यगमनइत्यस्मात् अततिव्याप्नोतीति आत्मानहिव्याप
कस्यावरणंघटतेतथावस्तुनःपरमार्थस्यवस्तुनआवरणंनघटतइत्यर्थः तस्मात्सर्वांतर्यामितयाप्रवेशोनमुख्योस्तिकुतस्तरां
गर्भप्रवेशः अतःकेवलानुभवाऽनंदस्वरूपएवत्वंविदितोसीत्याश्चर्य्यंममभाग्यमित्यर्थः १७ नन्वेतद्धेतुचतुष्टयंप्रपंचस्यावस्तु
त्वेघटेततत्तुनसंभवतिसत्यत्वेनप्रतीयतइत्याशंक्याह यइति आत्मनोदृश्येषुगुणेषुदेहादिषुस्वव्यतिरेकतआत्मव्यतिरेकेण
पृथक्सन्नयंदेहादिरितिव्यवस्यतिनिश्चिनोतियःपुमान्सोऽबुधः अविद्वान्व्यतिरेकदर्शनात् ॥ १ ॥ १ ॥ १ ॥ १ ॥ १ ॥

किंच मनीषितं मनसा विचारितं सत्तु देहादि सर्वं यतः विनाऽनुवादं वा चारंभणमात्रं विना न सम्यग्भवति अत अवस्तुत्वेन त्यक्तं वा
षितमेव खलु बुद्ध्या उपाददत् स्वीकुर्वन् अबुध इत्यर्थः १८ एवं परमेश्वरादृश्यस्य तद्व्यतिरेकेणासत्वमुक्तं परमेश्वरो पादानत्वाद
पि तद्व्यतिरेकेणासत्वमित्याह त्वत्तोस्येति न चैवं सत्यपि विकारित्वमित्याह अनीहादिति अगुणत्वादनीहत्वं ततोऽविकारित्व
मित्यर्थः नन्वनीहत्वे कथं कर्तृत्वं कर्तृत्वे वा कुतोऽविकारित्वं तत्राह त्वयीश्वर इति ब्रह्मत्वादविकारित्वमीश्वरत्वाच्च कर्तृत्वमि

विनानुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददत्पुमान् १८ त्वत्तोऽस्य जन्मस्थितिसंय
मान् विभो वदंत्यनीहादगुणादविक्रियात् त्वयीश्वरे ब्रह्मणि नो विरुध्यते त्वदाश्रयत्वादुप
चर्यते गुणैः १९ स त्वं त्रिलोकस्थितये स्वमायया बिभर्षि शुक्लं खलु वर्णमात्मनः सर्गाय
रक्तं रजसोपबृंहितं कृष्णं च वर्णं तमसा जनात्यये २० त्वमस्य लोकस्य विभो रिरक्षिषुर्गृहेऽ
वतीर्णोसि ममाखिलेश्वर राजन्यसंज्ञासुरकोटियूथपैर्निर्व्यूह्यमाना निहनिष्यसे चमूः २१
अयं त्वसभ्यस्तव जन्म नौ गृहे श्रुत्वाग्रजांस्ते न्यवधीत्सुरेश्वर ॥ इति नन्वेतदपि विरुद्धमेवेनेत्याह

त्वदाश्रयत्वादिति गुणैः कुर्वद्भिः स्थितिसृष्ट्यादिकर्तृत्वमुपचर्यते गुणाश्रयत्वात् यथा भृत्यकृतं राजनीति १९ एवंभूतस्यै
व तव यथा विश्वस्थितिसर्गलयार्थं त्रिवर्णा गुणावताराः एवमयं भूभारापनयनार्थमिति ज्ञातमित्याह स त्वमिति श्लोकद्वयेन
२० रिरक्षिषुः रक्षितुमिच्छुरवतीर्णोसि कृत्स्नेन वर्णेन अतः साधूनां रक्षणार्थं राजन्यसंज्ञा येऽसुरकोटियूथपास्तैर्निर्व्यूह्यमाना इत
स्ततश्चाल्यमानाः चमूः सेना निहनिष्यसि संहरिष्यसि २१ किंतु तथाप्यप्रमत्तेन त्वया भाव्यमित्याह अयं त्विति ॥ ६ ॥ ६ ॥

असभ्यः खलः समर्पितं कथितं अभिसरति आगमिष्यति २२ उपाधावत् अस्तौत् २३ त्वयि भयशंकैव नावन्नास्तीति श्लोक। चतुष्टयेनाह देवकी किंचिद्विज्ञापयितुं रूपमिति यत्किमपि रूपं वस्तु प्राहुर्वेदाः किं तद्वस्तु तदाह अव्यक्तं अत्र हेतुः आद्यं का रणं किं परमाणवः न ब्रह्म बृहत् किं प्रधानं न ज्योतिः चेतनं किं वैशेषिकाणामिव ज्ञानगुणं न निर्गुणं किं मीमांसकानामिव ज्ञा नपरिणामि न निर्विकारं किं पुष्कराक्षादीनामिव शक्तिविक्षेपेण परिणामि न सत्तामात्रं तर्हि किं सामान्यं न निर्विशेषं तर्हि किं का रणत्वात् सक्रियं न निरीहं सन्निधानमात्रेण कारणं एवंभूतं किमपि कार्यं कल्प्यं यद्वस्तु स एव साक्षात् त्वं विष्णुरिति अपरोक्षश्च।

स ते ऽवतारं पुरुषैः समर्पितं श्रुत्वाधुनैवाभिसरत्युदायुधः २२ श्रीशुक उवाच अथैनमात्म जं वीक्ष्य महापुरुषलक्षणं देवकी तमुपाधावत् कंसाद्भीता शुचिस्मिता २३ श्रीदेवक्युवा च रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्मज्योतिर्निर्गुणं निर्विकारं सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद्विष्णुरध्यात्मदीपः २४ नष्टे लोके द्विपरार्धावसाने महाभूतेष्वादिभूतं गतेषु व्यक्ते ऽव्यक्तं कालवेगेन याते भवानेकः शिष्यते ऽशेषसंज्ञः २५

ऽऽत्याह अध्यात्मदीप इति बुध्यादिकरण संघातप्रकाशक इत्यर्थः अथवा अव्यक्तं न केनापि प्रकारेण व्यज्यत इति अव्यक्तं कथं उत्पत्या तावन्न व्यज्यत इत्याह आद्यं सर्वस्य। कार्यस्याद्यं अनादीत्यर्थः तथा ब्रह्म ज्योतिर्निर्गुणं निर्विकारमिति चतुर्भिः पदैर्देशेन प्रकाशेन च गुणेन च विकारेण च व्यक्तिं निराकरोति तथा सत्तामात्रमिति निर्विशेषण निर्विशेषमिति सामान्येन निरीहमिति क्रियया च व्यक्तिं निराकरोति अन्यत्समानं एवंभूतस्य तव न भय शंकेति भावः २४ किंच महाप्रलयेप्यवशिष्यमाणस्य कुतो भयमित्याह नष्टे लोक इति चराचरे लोके महाभूतेषु लीनेतेष्वप्यादिभूतं भू तसूक्ष्मं प्रविष्टेषु तस्मिन्नपि व्यक्ते अव्यक्तं प्रधानं प्राप्ते अशेषात्मके प्रधाने संज्ञा प्रज्ञा यस्य स एवं मयि लीनमिदमास्तिपश्चादेव मुद्बोध

श्री
भा० द०
पू०
१४

किंच एवं प्रलयहेतुर्योयं काल एनं हे अव्यक्तबंधो प्रकृतिप्रवर्तक तस्य प्रलयावधिभूतस्य ते तव चेष्टां लीलां चेष्टते विपरिवर्तते नेपु
नः पुनर्वत्सरावृत्त्या महीयान् द्विपरार्द्धरूपः यस्य चेष्टामाहुः तं त्वा त्वां क्षेमधाम अभयस्थानं प्रपद्ये शरणं व्रजामि २६ क्षेमधामत्वमेवा
ह मर्त्य इति लोकान्प्रति यदृच्छया केनापि भाग्योदयेन हे आद्य २७ अस्तु ते विज्ञापयति स त्वमिति भृत्यानां वित्रासं हंतीति भृत्यवि

योऽयं कालस्तस्य तेऽव्यक्तबंधो चेष्टामाहुश्चेष्टते येन विश्वं निमेषादिर्वत्सरांतो महीयान्तं
त्वेशानं क्षेमधाम प्रपद्ये २६ मर्त्यो मृत्युव्यालभीतः पलायन्लोकान्सर्वान्निर्भयं नाध्यगच्छ
त् त्वत्पादाब्जं प्राप्य यदृच्छयाऽद्य स्वस्थः शेते मृत्युरस्मादपैति २७ स त्वं घोरादुग्रसेनात्मजान्न
स्त्राहि त्रस्तान्भृत्यवित्रासहासि रूपं चेदं पौरुषं ध्यानधिष्ण्यं मा प्रत्यक्षं मांसदृशां कृषीष्ठाः २८
जन्म ते मय्यसौ पापो मा विद्यान्मधुसूदन समुद्विजे भवद्धेतोः कंसादहमधीरधीः २९ उपसंहर
विश्वात्मन्नदो रूपमलौकिकं शंखचक्रगदापद्मश्रिया जुष्टं चतुर्भुजं ३० विश्वं यदेतत्स्वतनौ
निशांते यथाऽवकाशं पुरुषः परो भवान् बिभर्ति सोयं मम गर्भगोऽभूदहो नृलोकस्य विडंबनं हि

त्रासहा भृत्यविदिवाछेदः पौरुषं ऐश्वर्यं ध्यानास्पदं मांसदृशां मांसचक्षुषां प्रत्यक्षं मा कृथाः २८ भवत एव हेतोः ऽ॥ तत् ३१
निमित्तभूतात् कंसात् समुद्विजे बिभेमि यत अधीरचित्ता २९ ३० किमित्युपसंहर्तव्यं एवंभूतेन मया पुत्रेण महती तव श्लाघा स्या
दिति तत्राह विश्वमिति निशांते प्रलयावसाने यथावकाशमसंकोचतः असंभावितत्वादुपहास्यं तेव स्यादित्यर्थः ३१ ॥ ३ ॥ ३ ॥

राम
१४

चतुर्भुजरूपेणाविर्भावेकारणंतावदाह त्वमेवेत्यादिचतुर्दशभिः पूर्वसर्गेप्रथमजन्मनिअभूः आसीःपृश्निर्नामस्वायंभुवेमन्वं
तरेतदाअयंवसुदेवः ३२ तेपाथेतपःकृतवंतौ ३३ ३४ ३५ तप्यतोः आचरतोः ईयुर्गतानिमदात्मनोःमच्चित्तयोः ३६ अमुनाव

श्रीभगवानुवाच त्वमेवपूर्वसर्गेऽभूःपृश्निःस्वायंभुवेसति तदाऽयंसुतपानामप्रजापतिर
कल्मषः ३२ युवांवैब्रह्मणादिष्टौप्रजासर्गेयदाततः संनियम्येंद्रियग्रामंतेपाथेपरमंतपः ३३
वर्षवातातपहिमघर्म्मकालगुणाननु सहमानौश्वासरोधविनिर्धूतमनोमलौ ३४ शीर्णप
र्णानिराहारावुपशांतेनचेतसा मत्तःकामानभीप्संतौमदाराधनमीहतुः ३५ एवंवांतप्यतो
स्तीव्रंतपःपरमदुष्करं दिव्यवर्षसहस्राणिद्वादशेयुर्मदात्मनोः ३६ तदावांपरितुष्टोऽहममुना
वपुषाऽनघे तपसाश्रद्धयानित्यंभक्त्याचहृदिभावितः ३७ प्रादुरासंवरदराड्युवयोःकामदि
त्सया व्रियतांवरइत्युक्तेमादृशोवांवृतःसुतः ३८ अजुष्टग्राम्यविषयावनपत्यौचदंपती नव
व्राथेऽपवर्गंमेमोहितौदेवमायया ३९ गतेमयियुवांलब्ध्वावरंमत्सदृशंसुतं ग्राम्यान्भोगा
नभुंजाथांयुवांप्राप्तमनोरथौ ४० अदृष्ट्वाऽन्यतमंलोकेशीलौदार्यगुणैःसमं अहंसुतोवामभवंपृ

पुषा ३७ प्रादुरासंप्रादुर्भूतोस्मिवरदराट्वरदेषुश्रेष्ठइत्यर्थः तेनसकृद्वरेणचवारंवारमाविर्भाऽऽस्मिगर्भइतिश्रुतः ४१
वेकारणमुक्तंकामस्यदित्सयादातुमिच्छयामादृशःमयासदृशः ३८ ममत्तोपियुवामपवर्गंनवव्राथेनवृतवंतौ ३९ वरंदत्वामयि

भा०१०
पू०
१९

प्रदित्यां कश्यपात् वामन आसेतियदुक्तं तदपि तद्रूपयोर्युवयोरहमेव पुनरासमित्यर्थः ४२ ४३ प्राक्प्रथमं तावदेतद्रूपं मेजन्मे
तिस्मरणाय ज्ञानाय दर्शितं मद्भवं मद्विषयं अनंतरं त्वदिच्छया वालोपि भविष्यामीतिभावः ४४ ननु त्वयि प्रसन्नेपि कथमावयोः
पुनःपुनर्जन्मेति अतः परं न भविष्यतीत्याह युवामिति ४५ ४६ यदि कंसाद्बिभेषि तर्हि मां गोकुलं नय यशोदायाश्च तां कन्यां मन्मा

तयोर्वां पुनरेवाहमदित्यामास कश्यपात् उपेंद्र इति विख्यातो वामनत्वाच्च वामनः ४२ तृती
येस्मिन्भवेऽहं वै तेनैव वपुषाऽथ वां जातो भूयस्तयोरेव सत्यं मे व्याहृतं सति ४३ एतद्वां दर्शितं
रूपं प्राग्जन्मस्मरणाय मे नान्यथा मद्भवं ज्ञानं मर्त्यलिंगेन जायते ४४ युवां मां पुत्रभावेन ब्रह्म
भावेन वासकृत् चिंतयंतौ कृतस्नेहौ यास्येथे मद्गतिं परां ४५ श्रीशुक उवाच इत्युक्त्वासीद्ध
रिस्तूष्णीं भगवानात्ममायया पित्रोः संपश्यतोः सद्यो वभूव प्राकृतः शिशुः ४६ ततश्च शौरि
र्भगवत्प्रचोदितः सुतं समादाय स सूतिकागृहात् यदा वहिर्गंतुमियेष तर्ह्यजा या योगमायाऽ
जनि नंदजायया ४७ तया हृतप्रत्ययसर्ववृत्तिषु द्वाःस्थेषु पौरेष्वपि शायितेष्वथ द्वारस्तु स
र्वाः पिहिता दुरत्यया बृहत्कपाटायसकीलशृंखलैः ४८ ताः कृष्णवाहे वसुदेव आगते स्वयं
यामानयेति प्रथममेव भगवता प्रचोदितो वसुदेवो यदा गंतुमैच्छत् तदैव अजाऽपि योगमाया सा ॥४७॥ व्यवर्यंत यथा तमो रवेः
नंदजायया निमित्तमात्रभूतया अजनि जाता ४७ हृताः प्रत्ययाद्याः सर्वा वृत्तयो येषां अथवा हृजाः प्रत्ययाः अन्याश्च सर्वा वृत्तयो येषां
जाग्रतामपि तया भूतेषु द्वारपालेषु सत्सु बृहत्सु कपाटेषु लोहकीलकयुक्तशृंखलैः दृढाभिः कपाटादिभिर्दुरत्यया इतिवा ४८ स्वयमेव

मप्रियं तेन निवक्तव्येगुणश्छांदसः रवेर्न्निमितात् ४९ गंभीरोयस्तोयौघस्तस्य जवेन यऊर्मयस्तैः फेनिला फेनव्याप्ताभयानके आ
वर्तशतैर्व्याप्तापि श्रियःपतेः सीतापतेः ५० निद्रयात्मजया ५१ प्रतिमुच्यवध्वापदोः पादयोर्लोहंनिगडंआस्तेस्म ५२ जातंकिं

ववर्षपर्जन्यउपांशुगर्ज्जितः शेषोन्वगाद्वारिनिवारयन्फणैः ४९ मघोनिवर्षत्यसकृद्यमानुजा
गंभीरतोयौघजवोर्म्मिफेनिलांभयानकावर्तशताकुलांनदीमार्गंददौसिंधुरिवश्रियःपतेः ५०
नंदव्रजंशौरिरुपेत्यतत्रातान्गोपान्प्रसुप्तानुपलभ्यनिद्रया सुतंयशोदाशयनेनिधायतत्सुता
मुपादायपुनर्गृहानगात् ५१ देवक्याःशयनेन्यस्यवसुदेवोथदारिकां प्रतिमुच्यपदोर्लोह
मास्तेपूर्ववदावृतः ५२ यशोदानंदपत्नीचजातंपरमबुध्यत नतल्लिंगंपरिश्रांतानिद्रयाप
गतस्मृतिः ५३ इतिश्रीभागवतेमहापुराणेदशमस्कंधेकृष्णजन्मनितृतीयोध्यायः ३ श्री
शुकउवाच बहिरंतःपुरद्वारःसर्वाःपूर्ववदावृताः ततोबालध्वनिंश्रुत्वागृहपालाःसमुत्थि
ताः १ तेतुतूर्णमुपव्रज्यदेवक्यागर्भजन्मतत् आचख्युर्भोजराजाययदुद्विग्नःप्रतीक्षते २
सतल्पात्तूर्णमुत्थायकालोयमितिविह्वलः सूतीगृहमगात्तूर्णंप्रस्खलन्मुक्तमूर्द्धजः ३॥

मिदितिकेवलमबुध्यतनतुपुत्रःकन्यावेतियोगनिद्रयाचमोहितेतति ५३ इतिदशमेतृतीयोध्यायः ३ चतुर्थेचंडिकावा
क्यभाकर्ण्यातिभयाकुलः दुर्मंत्रिभिर्हितंमेनेकंसोबालादिहिंसनं १ ततःअष्टमेजन्म २ कालोमृत्युः ३॥श्री॥ श्री॥ श्री॥

भा॰ द॰ ५

पु॰ ८८

॥ ५ ॥ अंग हे भ्रातः ६ दीनदीनवत् दीनादपि दीनवत् न तु तथा पुत्रस्यान्यत्र नीतत्वात् सा च योगमायेति ज्ञातत्वात् याचितो पि स्त्री
चिच्छिदे आक्षिप्य जयाद् ७ अपोथयत् बलेन चिक्षेप ८ सद्य एव देवी भूत्वा ९ १० ११ कृपणानिति अन्यान् शिशून् हनि

तमाह भ्रातरं देवी कृपणा करुणं सती स्नुषेयं तव कल्याण स्त्रियं मा हन्तुमर्हसि ४ बहवो
हिंसिता भ्रातः शिशवः पावकोपमाः त्वया दैवनिसृष्टेन पुत्रिकैका प्रदीयतां ५ नन्वहं ते ह्य
वरजा दीना हतसुता प्रभो दातुमर्हसि मंदाया अंगेमां चरमां प्रजां ६ श्रीशुक उवाच उपगुह्यात्म
जामेवं रुदत्या दीनदीनवत् याचितस्तां विनिर्भर्त्स्य हस्तादाचिच्छिदे खलः ७ तां गृहीत्वा चर
णयोर्जातमात्रां स्वसुः सुतां अपोथयच्छिलापृष्ठे स्वार्थोन्मूलितसौहृदः ८ सा तद्धस्तात्समु
त्पत्य सद्यो देव्यंबरं गता अदृश्यतानुजा विष्णोः सायुधाष्टमहाभुजा ९ दिव्यस्रगंबरालेप
रत्नाभरणभूषिता धनुःशूलेषुचर्मासिशंखचक्रगदाधरा १० सिद्धचारणगंधर्वैरप्सरः
किन्नरोरगैः उपाहृतोरुबलिभिः स्तूयमानेदमब्रवीत् ११ किं मया हतया मंद जातः खलु त
वांतकृत् यत्र क्व वा पूर्वशत्रुर्मा हिंसीः कृपणान् वृथा १२ शुक उवाच इति प्रभाष्य तं देवी मा
या भगवती भुवि बहुनामनिकेतेषु बहुनामा बभूव ह १३ तया भिहितमाकर्ण्य कंसः परमवि

ष्यतीति ज्ञात्वा वारयति पाठांतरे तु मामां कृपणां वृथा अहिंसीः हिंसितवानसीति १२ बहुनामसु निकेतेषु वाराणस्यादिस्थाने १३ स्मितः

पामविस्मितः ॥

कथं दैवीवागनृता जातेति १४ हे भाम हे भगिनीभर्तः पुरुषादो राक्षसो यथा स्वापत्यमेव हिनस्ति तद्वत् १५ १६ १७ हे महाभा
गौ स्वकृतं भुजः स्वास्थ्यकर्मभोक्तॄन् किंच जंतवः प्राणिनः सदा नासते किंतु अल्पकालमेव तदापि एकत्र नासते किंतु वियुज्यंते
यतो दैवाधीनाः १८ सदा नासत इत्यनेन यदुक्तं जन्ममरणादि तदपि देहानामेव नात्मन इत्याह भुवीति भूतानि देहा एव यांति
अपयांति च भवंति न भवंति चेदर्थः यथा भुवि भौमानि घटादीनि तद्वत् एतेषु भूतेषु जन्मादिभिर्विक्रियमाणेषु अयमपरोक्षतया प्र

देवकीं वसुदेवं च विमुच्य प्रश्रितोऽब्रवीत् १४ अहो भगिन्यहो भाम मया वां बत पाप्मना पुरुषा
दइवापत्यं बहवो हिंसिताः सुताः १५ स त्वहं त्यक्तकारुण्यस्त्यक्तज्ञातिसुहृत्खलः कान्लो
कान्वै गमिष्यामि ब्रह्महेव मृतः श्वसन् १६ दैवमप्यनृतं वक्ति न मर्त्या एव केवलं यद्विश्रंभा
दहं पापः स्वसुर्निहतवान् शिशून् १७ माशोचतं महाभागावात्मजान्स्वकृतं भुजः जंतवो
न सदैकत्र दैवाधीनाः सहासते ॥ १८ ॥ भुवि भौमानि भूतानि यथा यांत्यपयांति च नाय
मात्मा तथैतेषु विपर्येति यथैव भूः १९ यथाऽनेवंविदो भेदो यत आत्मविपर्ययः ॥ २ ॥

त्यभिज्ञायमानो नाऽऽत्मा विपर्येति विपर्ययं न प्राप्नोति एकरूप एव वर्तत इत्यर्थः भौमेषु विक्रियमाणेषु यथा भूस्तथे
ति एवं विचार्यमाणे सति न शोकाद्यवकाशः १९ अज्ञानतस्तु न निवर्तत इत्याह यथेति यथा यथावत् अनेवंविदः
एवमजानतः आत्मविपर्ययः देहात्मबुद्धिर्भवति यतो विपर्ययाद्भेदो भवति देहाहंकारेण ह्यात्मनि परिच्छिन्ने सति इदं कारा
स्पदं भिन्नं भवति यतो भेदात्पुत्रादिदेहैर्योगश्च वियोगश्च ततः संसृतिः ॥ २ ॥ २ ॥ १ ॥ २ ॥ १ ॥ १ ॥ २ ॥ छ ॥ ॥

भा०द० पु० १० | ४

सुखदुःखेइति यावदज्ञानंननिवर्ततइत्यर्थः २० एवमुक्तप्रकारेणनैतेतवतनयाः अहंतुतान्नघातितवान् तथाप्यज्ञानदृष्ट्यास्व
नयान्मयाव्यापादितानपिमानुशोचेति सान्त्वयति· तस्मादिति अज्ञानाश्रयमेवकर्मवादमाह यतइति २१ कथंतर्हिब्राह्मणा
दिहंतुः तद्वधस्यचप्रायश्चित्तश्रवणंअज्ञानमूलमेवेत्याह यावदिति अस्वदृक् देहाभिमानीतावत्तदभिमानीतस्यदेहस्यहनन

देहयोगवियोगौचसंसृतिर्नंनिवर्तते २० तस्माद्भद्रेस्वतनयान्मयाव्यापादितानपिंमानुशो
चयतःसर्वःस्वकृतंविंदतेऽवशः २१ यावद्धतोस्मिहंतास्मीत्यात्मानंमन्यतेऽस्वदृक्· ताव
तदभिमान्यज्ञोबाध्यबाधकतामियात् २२ क्षमध्वंममदौरात्म्यंसाधवोदीनवत्सलाः इ
त्युक्त्वाऽश्रुमुखःपादौश्यालःस्वस्रोरथाग्रहीत् २३ मोचयामासनिगडात्विश्रब्धःकन्यका
गिरा देवकींवसुदेवंचदर्शयन्नात्मसौहृदं २४ भ्रातुःसमनुतप्तस्यक्षांतरोषाचदेवकी व्यसृ
जद्वसुदेवश्चप्रहस्यतमुवाचह २५ एवमेतन्महाभागयथावदसिदेहिनां अज्ञानप्रभवाऽ
हंधीःस्वपरेतिभिदायतः २६ शोकहर्षभयद्वेषलोभमोहमदान्विताः आत्मनिअभिमन्यमानइ

त्यर्थः २२ श्यालःकंसःस्वस्रोरितिस्वसृशब्देनद्विवचनानुपपत्यामिथुनगुणनद्वारामिथुनीलक्षणयास्वसृतत्पत्योरभिधा
नं·लिंगसमवायेनप्राणभृतउपदधातीतिवत्देवकीवसुदेवयोःप्रत्येकंपादमग्रहीदित्यर्थः श्यालशब्देनवाकथंचिद्वसुदेवाभिधानं
२३ आत्मसौहृदंप्रियवादादिनादर्शयन् २४ २५ २६ स्वपरभेददर्शनेकिंभवतितदाह शोकहर्षेति· ॥६॥६॥६॥

भावैरेवनिमित्तभूतैर्मिथोभावान्घ्नंतंभावमीश्वरंपृथग्दृशस्तेनपश्यंतिकिंत्वहमेवहंताहतश्चेतिमन्यंतइत्यर्थः २७ विशु
द्धंयथाभवति २८ २९ नातिकोविदाः दृष्टमात्रमतयः ३० ननिर्गतानिदशदिनानियेषांतान्अन्यांश्च ३१ ३२ अस्यतःवा

मिथोघ्नंतंनपश्यंतिभावैर्भावंपृथग्दृशः २७ श्रीशुकउवाच कंसएवंप्रसन्नाभ्यांविशु
द्धंप्रतिभाषितः देवकीवसुदेवाभ्यामनुज्ञातोऽविशद्गृहम् २८ तस्यांरात्र्यांव्यतीतायांकं
सआहूयमंत्रिणः तेभ्यआचष्टतत्सर्वंयदुक्तंयोगनिद्रया २९ आकर्ण्यभर्तुर्गदितंतमू
चुर्देवशत्रवः देवान्प्रतिकृतामर्षादैतेयानातिकोविदाः ३० एवंचेत्तर्हिभोजेंद्रपुरग्रामव्र
जादिषु अनिर्दशान्निर्दशांश्चहनिष्यामोऽद्यवैशिशून् ३१ किमुद्यमैःकरिष्यंतिदेवाःस
मरभीरवः नित्यमुद्विग्नमनसोज्याघोषैर्धनुषस्तव ३२ अस्यतस्तेशरव्रातैर्हन्यमानाःसमं
ततः जिजीविषवउत्सृज्यपलायनपरायणः ३३ केचित्प्रांजलयोदीनान्यस्तशस्त्रादिवौ
कसः मुक्तकच्छशिखाःकेचिद्भीताःस्मइतिवादिनः ३४ नत्वंविस्मृतशस्त्रास्त्रान्विरथा
न्भयसंवृतान् हंस्यन्यासक्तविमुखान्भग्नचापानयुध्यतः ३५ किंक्षेमशूरैर्विबुधैरसंयुगवि

णान्क्षिपतःसतः उत्सृज्यरणंत्यक्त्वा ३४ अन्यासक्तान्विमुखांश्चेतिनहंसिनहिनस्ति ३५ क्षेमे ऽऽकत्थनैः
निर्भयेदेशेशूरैः संयुगादन्यत्रविकत्थनैःप्रौढिवादोयेषांतैः ननुहरेर्विभेमिशंभोश्चेतिचेत्तत्राहुः रहोजुषेति॥ २॥ २॥

सर्वस्याप्यंतः प्रविष्टेन क्वचिदपि वहिः स्थितेन त्वयैः पुरुष प्रकृतिरहितमिलारत्नवनमोकोयस्य तेन शंभुनावा ३६ यद्यप्युग्रा देवा न किंचिदपि कर्त्तुं समर्था स्तथापि नीतिरन्नुस्त तथैवेत्याहुः तथापीति ३७ रूढपदः बद्धमूलः ३८ देवानां मूलं विष्णुः स

रहोजुषा किं हरिणा शंभुना वा वनौकसा ३६ किमिंद्रेणाल्पवीर्य्येण ब्रह्मणा वा तपस्यता त

थापि देवाः सापत्न्यान्नोपेक्ष्या इति मन्महे ततस्तन्मूलखनने नियुंक्ष्वास्मानुव्रतान् ३७

यथामयोंऽगे समुपेक्षितो नृभिर्न शक्यते रूढपदश्चिकित्सितुं यथेंद्रियग्राम उपेक्षितस्तथा रि

पुर्म्महान्बद्धबलो न चाल्यते ३८ मूलं विष्णुर्हि देवानां यत्र धर्मः सनातनः तस्य च ब्रह्म गोवि

प्रास्तपो यज्ञाः सदक्षिणाः ३९ तस्मात्सर्वात्मना राजन्ब्राह्मणान्ब्रह्मवादिनः तपस्विनो यज्ञ

शीलान्गाश्च हन्मो हविर्दुघाः ४० विप्रा गावश्च वेदाश्च तपः सत्यं दमः शमः श्रद्धा दया तिति

क्षा च क्रतवश्च हरेस्तनूः ४१ स हि सर्वसुराध्यक्षो ह्यसुरद्विड्गुहाशयः तन्मूला देवताः सर्वाः

सेश्वराः सचतुर्मुखाः अयं वै तद्वधोपायो यदृषीणां विहिंसनं ४२ श्रीशुक उवाच एवं दुर्म

त्रिभिः कंसः सह संमन्त्र्य दुर्मतिः ब्रह्महिंसां हितं मेने कालपाशावृतोऽसुरः ४३ संदिश्य साधु

लोकस्य कदने कदनप्रियान् कामरूपधरान्दिक्षु दानवान्गृहमाविशत् ४४ ॥ श्॥

च यत्र धर्मस्तत्रास्ते धर्मस्य मूलं वेदादय इति ३९ ४० ४१ किंच विप्रादयो हरेरेव तनवो यस्मात्तस्मादयमेवोपाय इत्याहुः

आरात्समीपमागतो मृत्युर्येषांते ४५ सतां विद्वेषो न मृत्युमात्रहेतुः किंतु बहूनर्थकारीत्याह आयुः श्रियमिति ४६ इति दशमस्कं
धटीकायां चतुर्थोऽध्यायः ४ पंचमे जातकं नंदः सूनोः कृत्वा महोत्सवं गत्वाऽथ मथुरां प्राप वसुदेवागमोत्सवं १ महामना उदारचित्तः
१।२ नियुते द्वे लक्षे सप्त तिलपर्वतांश्च प्रादात् कथंभूतान् रत्नौघैः रत्नसमूहैः शातकौंभांबरैः सुवर्णरसाक्तैः वस्त्रैश्चावृतान् ३ द्रव्याणां।

तेवै रजःप्रकृतयस्तमसा मूढचेतसः सतां विद्वेषमाचेरुरारादागतमृत्यवः ४५ आयुः श्रियं य
शो धर्मं लोकानाशिषस्त्वच हंति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ४६ इति श्रीभागवते
महापुराणे दशमस्कंधे चतुर्थोऽध्यायः ४ श्रीशुक उवाच नंदस्त्वात्मज उत्पन्ने जाताह्लादो महा
मनाः आहूय विप्रान्वेदज्ञान्स्नातः शुचिरलंकृतः १ वाचयित्वा स्वस्त्ययनं जातकर्मात्मजस्यवै
कारयामास विधिवत्पितृदेवार्चनं तथा २ धेनूनां नियुते प्रादात् विप्रेभ्यः समलंकृते· तिलाद्रीन्
सप्त रत्नौघ शातकौंभांबरावृतान् ३ कालेन स्नान शौचाभ्यां संस्कारैस्तपसेज्यया शुध्यंति दानैः
संतुष्ट्या द्रव्याण्यात्मात्मविद्यया ४ सौमंगल्यगिरो विप्राः सूतमागधवंदिनः ॥ गोहिरण्यादीनां तन्म।
ध्ये केषांचिद्दानैरेव शुद्धिर्यथा तथान्नदानादिषु उक्तजातकर्मादिसंस्कारैरेव गर्भाणां शुद्धिरिति दर्शयितुं प्रतिनियतानि शोधका
नि दृष्टांतत्वेनोदाहरति कालेनेति कालेन भूम्यादि स्नानेन देहादि शौचेनामेध्यलिप्तादि संस्कारैर्गर्भादि तपसा इंद्रियादि इ
ज्यया ब्राह्मणादि दानैर्द्रव्याणि संतुष्ट्या मन आत्मा आत्मविद्ययेति ४ सौमंगल्यगिरः स्वस्तिवाचका विप्रादयो बभूवुः ॥

तत्र सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः वंदिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ५ संमृष्टानि संसिक्तानि च द्वाराणि अ
जिराणि अंगणानि गृहांतराणि गृहमध्यानि च यस्मिन् सतथा चित्रध्वजेषु पताकानां स्रजश्चैलपल्लवतोरणानि च तैर्भूषितः ६ हरिद्रातै
लरूषिताः लिप्ता विचित्रधातवश्च बर्हस्रजश्च वस्त्राणि च कांचनमालाश्चालंकारतया विद्यंते येषां ते तथाभूताः गवादयो बभूवु

गायकाश्च जगुर्नेदुर्भेर्यो दुंदुभयो मुहुः ५ व्रजः संमृष्टसंसिक्तद्वाराजिरगृहांतरः चित्रध्वजपता
कास्रक्चैलपल्लवतोरणैः ६ गावो वृषा वत्सतरा हरिद्रातैलरूषिताः विचित्रधातुबर्हस्रग्वस्त्रकांचनमा
लिनः ७ महार्हवस्त्राभरणकंचुकोष्णीषभूषिताः गोपाः समाययू राजन्नानोपायनपाणयः ८ गोप्य
श्चाकर्ण्य मुदिता यशोदायाः सुतोद्भवं आत्मानं भूषयांचक्रुर्वस्त्राकल्पांजनादिभिः ९ नवकुंकुमकिं
जल्कमुखपंकजभूतयः बलिभिस्त्वरितं जग्मुः पृथुश्रोण्यश्चलत्कुचाः १० गोप्यः सुमृष्टमणिकुंड
लनिष्ककंठ्यश्चित्रांबराः पथि शिखाच्युतमाल्यवर्षाः नंदालयं सवलया व्रजतीर्विरेजुर्व्यालोल
कुंडलपयोधरहारशोभाः ११ ता आशिषः प्रयुंजानाश्चिरं पाहीति बालके हरिद्राचूर्णतैलाद्भिः
सिंचंत्योजनमुज्जगुः १२

रित्यर्थः ७ ८ आकल्पा अलंकाराः ९ नवकुंकुमकिंजल्कैर्मुखपंकजेषु भूतिः श्रीर्यासां ताः १० सु
सुमृष्टानि उज्ज्वलितानि मणिमयानि कुंडलानि यासां निष्कानि पदकानि कंठेषु यासां ताश्च ताश्च शिखाभ्यश्च्युतानि माल्यवर्षाणि या
सां ताः नंदालयं व्रजतीः व्रजंत्यः पथि विरेजुः सवलयाः कंकणभूषिताः व्यालोलैः कुंडलादिभिः शोभा यासां ताः ११ जनं सिंचंत्य अज

१३ १४ तेभ्यगोपेभ्यः प्रादात् १५ यथोचितमन्यानपिअपूजयत् १६ १७ हरेर्निवासेनये आत्मनिगुणाः सर्वप्रियत्वादय
स्तैरमायाआक्रीडंविहारस्थानं १८ वार्षिकंप्रतिवर्षदेयं १९ भ्रातरंसखायंतदवमोचनं तस्यवसतिस्थानंशकटो

अवाद्यंतविचित्राणिवादित्राणिमहोत्सवेंकृस्लेविश्वेश्वरेऽनंतेनंदस्यव्रजमागते १३ गोपाः
परस्परंत्हृष्टादधिक्षीरघृतांबुभिः आसिंचंतोविलिंपंतोनवनीतैश्चचिक्षिपुः १४ नंदोमहा
मनास्तेभ्योवासोऽलंकारगोधनंसूतमागधवंदिभ्योयेन्येविद्योपजीविनः १५ तैस्तैःकामैर
दीनात्मायथोचितमपूजयत् विष्णोराराधनार्थायस्वपुत्रस्योदयायच १६ रोहिणीचमहा
भागानंदगोपाभिनंदिता व्यचरद्दिव्यवासःस्रक्कंठाभरणभूषिता १७ ततआरभ्यनंदस्यव्रा
जःसर्वसमृद्धिमान् हरेर्निवासात्मगुणैरमाक्रीडमभून्नृप १८ गोपान्गोकुलरक्षायांनिरूप्य
मथुरांगतः नंदः कंसस्यवार्षिक्यंकरंदातुंकुरूद्वह १९ वसुदेवउपश्रुत्यभ्रातरंनंदमागतं ज्ञात्वा
दत्तकरंराज्ञेययौतदवमोचनं २० तंदृष्ट्वासहसोत्थायदेहःप्राणमिवागतं प्रीतःप्रियतमंदोर्भ्यांस
स्वजेप्रेमविह्वलः २१ पूजितःसुखमासीनः पृष्ट्वाऽनामयमादृतः प्रसक्तधीःस्वात्मजयोरिदमाहवि
शांपते २२ दिष्ट्याभ्रातःप्रवयसइदानीमप्रजस्यते प्रजाशायानिवृत्तस्यप्रजायत्समपद्यत २३ दि
ताम्भूमिम॥ २० २१ २२ २३ ॥ पुनर्भवः ॥ १ ॥ १ ॥ ऽष्ट्यासंसारचक्रेस्मिन्वर्तमानः पुनर्भवः ॥ १ ॥

भा०द०
पू०
२०

पुनर्जातस्त्वतत्र हेतुगर्भं विशेषणं संसारचक्रे वर्त्तमान इति २४ दुर्लभत्वमेवाह नैकत्रेति । प्रियपश्वादिसंवासश्च प्रियसंवासः हे प्रियेतिवा स्रोतस ओघेन नीयमानानां प्लवंतीति प्लवाः तृणकाष्ठादयस्तेषां यथा एकत्र स्थितिर्नास्ति तद्वत् २५ कच्चिदिति पशव्यादिरूपेन तस्मिन्वने निर्दोषगोपयोरव्यादिप्रभूतगोपिकास्त्वयादिना पुत्रक्षेमविवक्षया पृच्छति प्रसक्तधीः स्वात्मजयोरित्युक्तत्वात् २६ भवद्भ्यामुपलालितः सन् कच्चि द्वर्त्तत इति शेषः २७ पुत्रादर्शनक्लेशानाह पुंस इति सुहृदो वंधून्प्रत्यनुभावितः संपादितो यस्त्रिवर्गः स हि पुंसो विहितः युक्तः

उपलब्धो भवानद्य दुर्लभं प्रियदर्शनं २४ नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणां ओघेन व्यूह्यमानानां प्लवानां श्रोतसो यथा २५ कच्चित्पशव्यं निरुजं भूर्य्यंवुतृणवीरुधं बृहद्वनं तदधुनाय त्रास्से त्वं सुहृद्वृतः २६ भ्रातर्मम सुतः कच्चिन्मात्रा सह भवद्व्रजे तातं भवंतं मन्वानो भवद्भ्यामुपलालितः २७ पुंसस्त्रिवर्गो विहितः सुहृदो ह्यनुभावितः न तेषु क्लिश्यमानेषु त्रिवर्गोऽर्थाय कल्पते २८ नंद उवाच अहो ते देवकीपुत्राः कंसेन बहवो हताः एकावशिष्टावरजा कन्या साऽपि दिवं गता २९ नूनं ह्यदृष्टनिष्ठोऽयमदृष्टपरमो जनः ॥६॥ शास्त्रेणवा प्रोक्तः न स्वमात्र पर्य्यवसितः अतस्तेषु क्लिश्यमानेषु सुखाय न भवतीत्यर्थः २८ नंदो वसुदेवं सांत्वयन्नाह अहोत इति कंसचारभयसंकमानो नंदः कटाक्षेणोत्तरं दत्वान्यदेवाह २९ अदृष्टे एव निष्ठा समाप्तिर्यस्य सः यदेव पुत्रादिसुखमदमदृष्टं ही यतेन दैवते पुत्रादयो न भवंतीत्यर्थः अदृष्टपरमस्तथा अदृष्टे एव परमं यस्य सः यद्यपि पुत्रादयो वियुक्तास्तथापि तान दृष्टमेव पुनः संगमयतीत्यर्थः एवमदृष्टमात्मनस्तत्त्वं अव्यभिचारि कारणं सुखदुःखयोर्यो वेद स न मुह्यति तस्मादिदानीं त्वया दुःखं न भावनीयं ॥३॥

एम
२०

मृतानामपि वियुक्तानामपि च कालांतरे दर्शनयोगयोः संभवात् अस्मदादिभिरपि कालांतरे तद्वियोगे सत्यपीति नंदस्य देवी वागेषा भा विसूचिका ३० तां बुध्वा वसुदेवो दुःखं त्यक्त्वा नंदमाह करो वै इति वः युष्माभिः ३१ ३२ इति दशमस्कंधे पंचमोऽध्यायः ५ षष्ठे स खु गि रा नंदो व्रजं गच्छन् मृतां पथि दृष्ट्वा तु राक्षसीं तस्या मृत्युं श्रुत्वाऽथ विस्मितः १ २ कंसविषये विशंकमानं राजानं प्रति अविषये प्रवृत्ता

अदृष्टमात्मनस्तत्त्वं यो वेद स न मुह्यति ३० वसुदेव उवाच करो वै वार्षिको दत्तो राज्ञे दृष्टा वयं च वः नेह स्थेयं बहुतिथं संत्युत्पाताश्च गोकुले ३१ श्रीशुक उवाच इति नंदादयो गोपाः प्रोक्तास्ते शौरिणा ययुः अनोभिरनडुद्युक्तैस्तमनुज्ञाप्य गोकुलं ३२ इति श्रीभागवते महापुराणे दशमस्कंधे नंदवसुदेवसंवादे पंचमोऽध्यायः ५ श्रीशुक उवाच नंदः पथि वचः शौरेर्न मृषेति विचिंतयन् हरिं जगाम शरणमुत्पातागमशंकितः १ कंसेन प्रहिता घोरा पूतना बालघातिनी शिशूंश्चचार निघ्नंती पुरग्रामव्रजादिषु २ न यत्र श्रवणादीनि रक्षोघ्नानि स्वकर्मसु कुर्वंति सात्वतां भर्तुर्यातुधान्यश्च तत्र हि ३ सा खेचर्य्येकदोपेत्य पूतना नंदगोकुलं योषित्वा माययात्मानं प्राविशत्कामचारिणी ४ तां केशवंधव्यतिषक्तमल्लिकां बृहन्नितंवस्तनकृच्छ्रमध्यमां

सैवमरिष्यतीति सूचयन्नाह न यत्रेति यत्र श्रीकृष्णस्य श्रवणादीनि न संति तत्रैव तासां शक्तिः साक्षात्तस्मिन्नेव सति का शंकेति भा वः ३ योषित्वा वेषतो वरां नारीमिव आत्मानं विधाय ननु निर्ल्लज्जा निर्विशंका च सती कथं परसद्मनि प्रविष्टा अत आह कामचारि णीति न हि कामचारिण्याः किंचिदं चित्रमित्यर्थः ४ तां वनितां पतिं द्रष्टुमागतां अतिरूपवतीं श्रियमिव गोप्योऽमंसत इत्युत्तरश्लोकेनान्वयः

श्रोसाम्यार्थानिविशेषणानिकेशबंधव्यतिषक्तमल्लिकांधम्मिल्लसंसक्तमल्लिकाकुसुमां बृहतानितंबेनस्तनाभ्यांचउभयत्र।
आक्रांतमिवकृच्छ्रेणकृशंमध्यमुदरंयस्याः सातांसुवाससंशोभनेनरमणीयेवाससीयस्यास्तांकंपितयोः कर्णभूषणयोस्त्विषाउ
ल्लसद्भिः कुंतलैर्मंडितमाननंयस्यास्तां ५ वल्गुस्मितापांगविक्षितैर्वल्गुरम्यंस्मितंयेषुतेतथाभूताअपांगविसर्गायेषुतै।
र्वीक्षितैर्व्रजौकसांमनोहरंती अतोगोपाल्हृतमनस्त्वेनतैर्ननिवारितवंतइत्युक्तंभवति गोप्यश्चश्रियमिवमत्वातूष्णीमासन्

सुवाससंकंपितकर्णभूषणत्विषोल्लसत्कुंतलभूषिताननां ५ वल्गुस्मितापांगविसर्गवी
क्षितैर्मनोहरंतींवनितांव्रजौकसां अमंसतांभोजकरेणरूपिणींगोप्यः श्रियंद्रष्टुमिवागतां
पतिं ६ बालग्रहस्तत्रविचिन्वतीशिशून्यदृच्छयानंदगृहेऽसदंतकं बालंप्रतिच्छन्ननिजो
रुतेजसंददर्शतल्पेऽग्निमिवाहितंभसि ७ विबुध्यतांबालकमारिकाग्रहंचराचरात्मासनिमी
लितेक्षणः अनंतमारोपयदंकमंतकंयथोरगंसुप्तमबुद्धिरज्जुधीः ८ तांतीक्ष्णचित्तामति
वामचेष्टितांवीक्ष्यांतराकोशपरिच्छदासिवत॥ अतः केनाप्यनिवारितासतीप्रविवेशेतिभावः ६ बालग्रहः
पूतनाअसदंतकंबालंददर्श असतामंतकं दृष्ट्वाकथंनबिभेतितत्राह प्रतिच्छन्ननिजोरुतेजसंबालनाट्येनप्रतिच्छन्नंति
रोहितंनिजमुरुतेजोयेनतं कमिवभस्मिभस्मन्याहितमग्निमिवेति ७ चराचरात्मत्वात्देवतांविबुध्यनिमीलितेक्षणआसस्व
यमनंतुइष्वाचामंतकंबालंमत्वासाअंकमारोपयात् यथोरगंसुप्तमबुद्धिश्चासौरज्जुधीश्चसः अज्ञानतोरज्जुबुद्ध्यायथागृ।
ह्णातितद्वदित्यर्थः ८ ननुयशोदारोहिण्योतांकथंनन्यवारयेतांतत्राह तामितिवामवल्गुजनन्याइवचेष्टितंयस्यास्तांवरत्त्विवं

चसहसैवअंतरागृहमध्येवीक्ष्यअंतस्तीक्ष्णेवहिर्मार्द्दवेचदृष्टांतः कोशपरिच्छदासिवत् मृदुचित्रचर्म्ममयः कोशपरिच्छदः आ
वरणंयस्यअसेः खड्गस्यतद्वत् तत्प्रभयाचधर्षिते अभिभूतेअहमस्यजननीइयंवेतिमोहितेचसत्यौजननीजनन्यौनिरीक्षमा
णेएवकेवलमतिष्ठतांनतुनिवारितवत्यौ ९ तस्मिन्स्थानेदुर्ज्जरंवीर्यंविषंयस्मिन् तंस्तनंश्रीकृष्णमंकमादायतस्मैशिशवेददौ अथ

वरस्त्रियंतत्प्रभयाचधर्षितेनिरीक्षमाणेजननीह्यतिष्ठतां ९ तस्मिन्स्तनंदुर्ज्जरवीर्य्यमु।
ल्बणंघोरांकमादायशिशोर्द्ददावथ गाढंकराभ्यांभगवान्प्रपीड्यतत्प्राणैः समंरोषसमन्वि
तोऽपिवत् १० सामुंचमुंचालमितिप्रभाषिणीनिष्पीड्यमानाऽखिलजीवमर्मणि विवृ
त्यनेत्रेचरणौभुजौमुहुर्निःस्विन्नगात्राक्षिपतीरुरोदह ११ तस्याः स्वनेनातिगभीररंहसा।
साद्रिर्मही द्यौश्चचचालसग्रहाः रसादिशश्चप्रतिनेदिरेजनाः पेतुःक्षितौवज्रनिपातशंकया
१२ निशाचरीत्थंव्यथितस्तनाव्यसुर्व्यादायकेशांश्चरणौभुजावपि प्रसार्य्यगोष्ठेनिजरूप
मास्थितावज्राहतोवृत्रइवापतन्नृप १३ पतमानोपितद्देहस्त्रिगव्यूत्यंतरद्रुमान्॥ ६॥ ६॥

अनंतरमेवप्रपीड्यकेवलंविषमपथ्यमितिमत्वेवतस्याः प्राणैःसहापिवत् १० चरणौचमुहुर्मुहुःक्षिपतीनिःस्विन्नानि
स्वेदयुक्तानिगात्राणियस्याःसा ११ रसाः रसातलानिच १२ व्यादायमुखंविवृत्यनिजरूपमास्थितामरणसमयेकपटमयुक्त
मितिवृत्रोवज्राहतः १३ पतन्नपितस्यादेहः षट्क्रोशमध्यवर्तिनो॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥ ६॥

ई॰
भा॰ द॰
पू॰
२२

दुमांश्चूर्णीचकार १४ ईषामात्रोग्रदंष्ट्रास्यं ईषालांगलदंडः तत्प्रमाणा उग्रा दंष्ट्रा यस्मिन् तत्तथाभूतमास्यं यस्मिन् तत्तस्याः कलेवरं वी
क्ष्य गोपा गोप्यश्च संतत्रसुः संत्रासहेतुत्वेन पुनरष्टभिः पदैर्विशिनष्टि गिरिकंदरवत् नासिके यस्मिन् तत् गिरेः शृंगतौ स्थूलोपलौ तावि
व स्तनौ यस्मिन् तत् रौद्रं घोरं प्रकीर्णा अरुणा मूर्द्धजा यस्मिन् तत् १५ अंधकूपाविव गभीरे अक्षिणी यस्मिन् तत् पुलिनवदारोहौ
जघने ताभ्यां भीषणं बद्धाः सेतवइव भुजौ ऊरू अंघ्री च यस्मिन् तत् शून्यतोयह्रदइव उदरं यस्मिन् तत् इति १६ पूर्वमेव तस्याः शब्दे

चूर्णयामास राजेंद्र महदासीत्तदद्भुतं १४ ईषामात्रोग्रदंष्ट्रास्यं गिरिकंदरनासिकं गंडशै
लस्तनं रौद्रं प्रकीर्णारुणमूर्द्धजं १५ अंधकूपगभीराक्षं पुलिनारोहभीषणं बद्धसेतुभु
जोर्वंघ्रि शून्यतोयह्रदोदरं १६ संतत्रसुः स्म तद्वीक्ष्य गोपा गोप्यः कलेवरं पूर्वं तु तन्निःस्वनि
तभिन्नहृत्कर्णमस्तकाः १७ बालं च तस्या उरसि क्रीडंतमकुतोभयं गोप्यस्तूर्णं समभ्येत्य
जगृहुर्जातसंभ्रमाः १८ यशोदारोहिणीभ्यां ताः समं बालस्य सर्वतः रक्षां विदधिरे सम्यक् गो
पुच्छभ्रमणादिभिः १९ गोमूत्रेण स्नापयित्वा पुनर्गोरजसार्भकं रक्षां चक्रुश्च शकृता द्वादशांगेषु
नामभिः २० गोप्यः संस्पृष्टसलिला अंगेषु करयोः पृथक् ॥ न भीताः पुनर्दर्शनेनापि तत्रसुरित्याह पूर्वं
त्विति तस्या निःस्वनितं शब्दः तेन निर्भिन्नानि हृत्कर्णमस्तकानि येषां ते १७ १८ १९ द्वादशांगेषु ललाटादिषु केशवादिद्वा
दशनामभिः २० अनाचांता एव प्रथमं अतिसंभ्रमेणैवं रक्षां कृत्वा किंचिल्लब्धश्वासाः पुनस्तान्यर्थेण बीजन्यासमकुर्वन्नित्याह गोप्य
इति संस्पृष्टसलिलाः आचांताः आत्मनि प्रथमं अंगेषु करयोश्च पृथक् अजाद्येकादशबीजानां मध्ये करस्युद्धौ त्रीणि करयोः ॥ श॥

संधिषु चत्वारि चत्वारि तया अंघ्र्यादावेकैकस्मिन्नंगे अजाद्येकैकं बीजं न्यस्य बालस्याप्यंगेषु तथैवाकुर्वत २१ अंघ्रिं अंघ्री· जानु जानुनी· भुजं भुजौ· कं शिरः २२ तथा दिक्षु रक्षामकुर्वन्नित्याह चक्र्यग्रत इति चक्रसहितो हरिस्तवाग्रतोस्तु सहगदो गदासहि

न्यस्यात्मन्यथ बालस्य बीजन्यासमकुर्वत २१ अव्यादजोंघ्रिं मणिमांस्तव जान्वथोरू यज्ञोऽच्युतः कटितटं जठरं हयास्यः हृत्केशवस्त्वदुर ईश इनस्तु कंठं विष्णुर्भुजं मुखमु रुक्रम ईश्वरः कं २२ चक्र्यग्रतः सह गदो हरिरस्तु पश्चात्त्वत्पार्श्वयोर्धनुरसी मधुहाऽजन श्च कोणेषु शंख उरुगाय उपर्युपेंद्रस्तार्क्ष्यः क्षितौ हलधरः पुरुषः समंतात् २३ इंद्रिया णि हृषीकेशः प्राणान्नारायणोवतु श्वेतद्वीपपतिश्चित्तं मनो योगेश्वरोवतु २४ पृश्निगर्भस्तु ते बुद्धिमात्मानं भगवान्परः क्रीडंतं पातु गोविंदः शयानं पातु माधवः २५ व्रजंतमव्याद्वै कुंठ आसीनं त्वां श्रियः पतिः भुंजानं यज्ञभुक् पातु सर्वग्रहभयंकरः २६ डाकिन्यो यातु धान्यश्च कूष्मांडा येऽर्भकग्रहाः भूतप्रेतपिशाचाश्च यक्षरक्षोविनायकाः २७ कोटरा रे वती ज्येष्ठा पूतना मातृकादयः उन्मादा ये ह्यपस्मारा देहप्राणेंद्रियद्रुहः २८ ॥ ६ ॥ ६ ॥

तो हरिस्तव पश्चादस्तु त्वत्पार्श्वयोर्धनुर्धरो मधुहा असिधरोऽजनश्च एतावास्तां शंखधर उरुगायश्च चतुःकोणेषु क्षितौ अध स्तात् २३ एवं बहीरक्षां कृत्वा अंतरंगामकुर्वन्नित्याह इंद्रियाणीति २४ आत्मानमहंकारं २५ २६ २७ २८ ॥ ६ ॥ ६ ॥

भा० द० पू० २२

२९ संन्यवेशयत्शाययामास ३० ३१ विस्मयमेवाह नूनमिति वतविस्मयेसांप्रतंसऋषिस्तपःप्रभाववान्योगेशोज्ञा
नीवासम्यगासयतःसएवदृष्टइति ३२ ३३ विस्मयांतरमाह दह्यमानस्येति कृष्णेननिर्भुक्तः अतएवसपद्याहतः पाप्मा

स्वप्नदृष्टामहोत्पातावृद्धबालग्रहाश्चये सर्वेनश्यंतुतेविष्णोर्नामग्रहणभीरवः २९ इ
तिप्रणयबद्धाभिर्गोपीभिः कृतरक्षणं पाययित्वास्तनंमातासंन्यवेशयदात्मजं ३० ता
वन्नंदादयोगोपामथुरायाव्रजंगताः विलोक्यपूतनादेहंबभूवुरतिविस्मिताः ३१ नूनंब
तर्षिः संजातोयोगेशोवासमाससः सएवदृष्टोह्युत्पातोयदाहानकदुंदुभिः ३२ कलेव
रंपरशुभिश्छित्वातत्तेव्रजौकसः दूरेक्षिप्त्वाऽवयवशोन्यदहन्काष्ठवेष्टितं ३३ दह्यमा
नस्यदेहस्यधूमश्चागरुसौरभः उत्थितःकृष्णनिर्भुक्तःसपद्याहतपाप्मनः ३४ पूतनालोक
बालघ्नीराक्षसीरुधिराशना जिघांसयाऽपिहरयेस्तनंदत्वापसद्गतिं ३५ किंपुनःश्रद्धया
भक्त्याकृष्णायपरमात्मने यच्छन्प्रियतमंकिंनुरक्तास्तन्मातरोयथा ३६ पद्भ्यांभक्त
हृदिस्थाभ्यांवंद्याभ्यांलोकवंदितैः अंगंयस्याःसमाक्रम्यभगवानपिवत्स्तनं॥ ३७॥

यस्यसः ३४ प्रसंगात्कैमुत्यन्यायेनभक्तिवैभवमाह पूतनेति ३५ श्रद्धयाआस्तिक्येनभक्त्याप्रेम्णारक्ताः स्निग्धास्त
न्मातरइतिवत्साहरणलीलाभिप्रायेणवहुवचनंगोगोपिकास्तदामातरोऽभवन्निति ३६ ३७ ॥ ६ ॥ ६ ॥ ६ ॥

राम २३

स्वर्गमोक्षं ३८ ३९ ४० ४१ ४२ ४३ यएतत्पूतनामोक्षंआर्भकंअर्भकचरितंकिंतत्पूतनामोक्षमिति अत्तुंदैत्यकुलानीशः
पूतनायाः शिशुच्छलात् स्तन्यापोशानतः प्राणैः प्राणाहुतिमकल्पयत् प्रोष्यागतः यामांत रात्समागतः ४४ इतिश्री

यातुधान्यपिसास्वर्गमवापजननीगतिं कृष्णभुक्तस्तनक्षीराः किमुगावोनुमातरः ३८ प
यांसियासामपिबत्पुत्रस्नेहस्नुतान्यलं भगवान्देवकीपुत्रः कैवल्याद्यखिलप्रदः ३९ तासा
मविरतंकृष्णेकुर्वतीनांसुतेक्षणं नपुनःकल्पतेराजन्संसारोऽज्ञानसंभवः ४० कटुधूमस्य
सौरभ्यमवघ्रायव्रजौकसः किमिदंकुतएवेतिवदंतोव्रजमाययुः ४१ तेतत्रवर्णितंगोपैः
पूतनागमनादिकं श्रुत्वातन्निधनंस्वस्तिशिशोश्चासन्सुविस्मिताः ४२ नंदःस्वपुत्रमादा
यप्रोष्यागतउदारधीः मूर्ध्न्युपाघ्रायपरमांमुदंलेभेकुरूद्वह ४३ यएतत्पूतनामोक्षंकृष्ण
स्यार्भकमद्भुतं शृणुयाच्छ्रद्धयामर्त्योगोविंदेलभतेरतिं ४४ इतिश्रीभागवतेमहापुरा
णेदशमस्कंधेपूतनावधोनामषष्ठोऽध्यायः ६ राजोवाच येनयेनावतारेणभगवा
न्हरिरीश्वरः करोतिकर्णरम्याणिमनोज्ञानिचनः प्रभो ॥ १ ॥ यच्छृण्वतोऽपैत्यरतिर्वि
तृष्णासत्वंचशुध्यत्यचिरेणपुंसः भक्तिर्हरौतत्पुरुषेचसख्यंतदेवहारंवदमन्यसेचेत् २ ॥
भटीकायांषष्ठोऽध्यायः ६ उत्क्षिपन्शकटंव्योम्नितृणावर्तमधःक्षिपन् दर्शयन्विश्वमास्येचकृष्णःक्रीडतिसप्तमे १ कृष्ण

भा० द० पू० २४

येनयेनेति येनयेनमत्स्याद्यवतारेणापियानिकर्म्माणिकरोतितानिनः कर्णसुखावहानिमनः प्रीतिकराणीतिचभवंत्येव १ तथापियत्शृण्वतः पुंसः पुरुषमात्रस्यअरतिर्मनोग्लानिः तन्मूलभूताविविधातृष्णाचअपगच्छतितथासत्वशुद्धिर्हरिभक्तिर्हरिदासससख्यानिचभवंतितद्देवहारंहरेरचरितंमनोहरंवावदाऽनुग्रहंयदिकरोषीति २ अत्यौत्सुक्येनपुनर्विशिनष्टि अथेति अनुरुंधतः अनुकुर्वतः ३ उत्थानंशिशोरंगपरिवर्तनंतत्रकरणीयेकौतुकाप्लुवेउत्सवाभिषेकेतथातस्मिन्नेवदिनेजन्मर्क्षस्यापियोगेअति

अथान्यदपिकृष्णस्यतोकाचरितमद्भुतं मानुषंलोकमासाद्यतज्जातिमनुरुंधतः ३ श्रीशुकउवाच कदाचिदौत्थानिककौतुकाप्लवेजन्मर्क्षयोगेसमवेतयोषितां वादित्रगीतद्विजमंत्रवाचकैश्चकारसूनोरभिषेचनंसती ४ नंदस्यपत्नीकृतमज्जनादिकंविप्रैः कृतस्वस्त्ययनंसुपूजितैः अन्नाद्यवासःस्रगभीष्टधेनुभिः संजातनिद्राक्षमशीशयच्छनैः ५ ॥ औत्थानिकौत्सुक्यमनामनस्विनीसमागतान्पूजयतीव्रजौकसः नैवाशृणोद्वैरुदितंसुतस्यसारुदन्स्तनार्थीचरणावुदक्षिपत् ६ अधःशयानस्यशिशोरनोऽल्पकप्रवालमृद्वंघ्रिहतंव्यवर्तत ।

महोत्सवेसमवेतयोषितांमिलितपुरंध्रीणांमध्येवादित्रादिभिः शोभितमभिषेचनंसतीयशोदाचकार ४ अन्नादिभिः सुपूजितैर्विप्रैः कृतमंगलंसंजातनिद्रेअक्षिणीयस्यतंततश्चअशीशयत्शायितवती शकटस्याधस्तात्प्रेंखे ५ उदक्षिपत् ऊर्ध्वंचालितवान् ६ तदधःशयानस्यशिशोरल्पकश्चासौप्रवालवन्मृदुश्चयोंऽघ्रिस्तेनहतंअनः शकटंव्यवर्ततविपरीतमपतत् कथंविध्वस्तानिनानारसवंतिकुप्यभाजनानिस्वर्णरजतातिरिक्तकांस्यादिमयानि यथाभवंतितथाचक्रेचअक्षश्चचक्रा

व्यस्ताश्चक्राक्षाः यस्मिन् विभिन्नः कूवरो युगंधरो यस्य तत्तच्च यथा भवति तथाव्यवर्तत ७ अद्भुतदर्शनेन आकुला बभूवुः न
देवाहकथमिति विपर्ययगात् विपरीतमपतदिति ८ ९ नश्रद्दधिरे विश्वासं न जग्मुः उत अपि बालस्यैतन्न संभवति एते च बालाः किं
जानंतीति १० रक्षोघ्नैः सूक्तैः कृत्वा ११ भगवत्प्रभावानभिज्ञविप्रचेष्टितं विडंवयन्नाह पूर्ववदित्यादिना बलिभिः शक्तैः यद्वा अष्ट

विध्वस्तनानारसकुप्यभाजनं व्यत्यस्तचक्राक्षविभिन्नकूवरं ७ दृष्ट्वा यशोदाप्रमुखा व्र
जस्त्रिय औत्थानिके कर्म्मणि याः समागताः नंदादयश्चाद्भुतदर्शनाकुलाः कथं स्वयं वै
शकटं विपर्यगात् ८ इति ब्रुवंनोति विषादमोहिता जनाः समंतात् परिवव्रुरातं वत् ऊचुर
व्यवसितमतीन् गोपान् गोपीश्च बालकाः रुदतानेन पादेन क्षिप्तमेतन्न संशयः ९ न ते श्र
द्दधिरे गोपाः बालभाषितमित्युत अप्रमेयं बलं तस्य बालकस्य न ते विदुः १० रुदंतं सुतमा
दाय यशोदा ग्रहशंकिता कृतस्वस्त्ययनं विप्रैः सूक्तैः स्तनमपाययत् ११ पूर्ववत् स्थापि
तं गोपैर्बलिभिः सपरिच्छदं विप्रा हुत्वार्च्चयांचक्रुर्दध्यक्षतकुशांबुभिः १२ येऽसूयाऽनृ
तदंभेर्ष्याहिंसामानविवर्जिताः न तेषां सत्यशीलानामाशिषो विफलाः कृताः ॥ १३ ॥

दिक्षु बलिभिः सहितं सपरिकरं करं यथापूर्वं स्थापितं विप्राः दध्यादिभिरर्च्चयामासुः हुत्वा ग्रहादिहोमं विधाय १२ असूयागु
णेषु दोषाविष्करणं ईर्ष्या अक्षांतिस्तैरसूयादिभिर्विवर्जितास्तेषामाशिषः कृतास्तैः प्रयुक्ताः १३ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

इतिएवमभिप्रेत्यसामर्ग्यजुर्भिरुपाकृतैः संस्कृतैःपवित्राश्रोषधयोयेषुजलेषुतैः कृत्वाद्विजोत्तमैःकर्तृभिरभिषिच्यअभिषेकं कारयित्वा १४ हुत्वाहावयित्वा १५ गावःगाश्चप्रादात् अन्वंयुजतआशिषोयुयुजुः १६ तास्तथैववभूवुरित्यर्थः १७ उत्क्षिप्यमृदुपादेनशकटंक्षोभ्निलीलया तृणावर्त्तपदापीड्यभुव्यपातयदर्भकः आरोहमुत्संगं तृणावर्त्तात्स्वमृत्युपरिहारायकंसे

इतिबालकमादायसामर्ग्यजुरुपाकृतैः जलैःपवित्रौषधिभिरभिषिच्यद्विजोत्तमैः १४ वाचयित्वास्वस्त्ययनंनंदगोपःसमाहितः हुत्वाचाग्निंद्विजातिभ्यःप्रादादन्नंमहागुणं १५ गावःसर्वगुणोपेतावासःस्रग्रुक्ममालिनीः आत्मजाभ्युदयार्थायप्रादात्तेचान्वयुंजत १६ विप्रामंत्रविदोयुक्तास्तैर्याःप्रोक्तास्तथाशिषः तानिष्फलाभविष्यंतिनकदाचिदपिस्फुटं १७ एकदारोहमारूढंलालयंतीसुतंसती गरिमाणंशिशोर्वोढुंनसेहेगिरिकूटवत् १८ भूमौ निधायतंगोपीविस्मिताभारपीडिता महापुरुषमादध्यौजगतामासकर्म्मसु १९ दैत्यो नाम्नातृणावर्तःकंसभृत्यःप्रचोदितः चक्रवातस्वरूपेणजहारासीनमर्भकं २० गोकुलंसर्वमावृण्वन्मुष्णंश्चक्षूंषिरेणुभिः ईरयन्सुमहा— घोरशब्देनप्रदिशोदिशः २१।

नैवात्मनउत्संगादुत्तारायकृतंभारमजानती १८ उत्पातशंकयामहापुरुषमादध्यौश्रीकृष्णोदरवर्त्तिनांजगतांभारेणपीडितविस्मितासती यद्वाजगतांमध्येकर्म्मसुआसबभूवनतुजगदुदरंतंवेदेत्यर्थः १९ २० ईरयन्निनादयन्नित्यर्थः॥२१॥

यतः यत्रन्यस्तवतीतस्मिन्स्थानेनापश्यत् २२ २३ खरपवनचक्रात्पांसुवर्षेसति २४ उपारतः पांसुवर्षस्यवेगोयस्मिन्त
याभूतेपवनेसतितत्रतस्याः रुदितमनुनिशम्यगोप्योरुरुदुः २५ वात्याचक्रवातः तद्रूपधरः कृष्णंहरन्शांतरयः कथंचिन्न

मुहूर्तमभवद्गोष्ठंरजसातमसावृतं सुतंयशोदानापश्यत्तस्मिन्न्यस्तवतीयतः २२ नाप
श्यत्कश्चनात्मानंपरंचापिविमोहितः तृणावर्तनिसृष्टाभिःशर्कराभिरुपद्रुतः २३ इतिख
रपवनचक्रपांसुवर्षेसुतपदवीमबलाऽविलक्ष्यमाता अतिकरुणमनुस्मरंत्यशोचद्भु
विपतितामृतवत्सकायथागौः २४ रुदितमनुनिशम्यतत्रगोप्योभृशमनुतप्तधियोऽ
श्रुपूर्णमुख्यः रुरुदुरनुपलभ्यनंदसूनुंपवनउपारतपांसुवर्षवेगे २५ तृणावर्तःशांतरयो
वात्यारूपधरोहरन् कृष्णंनभोगतोगंतुंनाशक्नोद्भूरिभारभृत् २६ तमश्मानंमन्यमानआ
त्मनोगुरुमत्तयागलेगृहीतउत्स्रष्टुंनाशक्नोदद्भुतार्भकं २७ गलग्रहणनिश्चेष्टोदैत्योनिर्ग
तलोचनः अव्यक्तरावोन्यपतत्सहबालोव्यसुर्व्रजे २८ तमंतरिक्षात्पतितंशिलायांवि
शीर्णसर्वावयवंकरालं पुरंयथारुद्रशरेणविद्धंस्त्रियोरुदंत्योददृशुः समेताः ॥ २९ ॥

भोगतः ततः परंगंतुंनाशक्नोदित्यर्थः २६ गुरुमत्तयातिगौरवेणतंतथाअश्मानंअश्मवंतंपर्वतप्रायंमन्यमानस्तेनैव
आत्मनोगलेगृहीतत्वात् तंत्यक्तुमिच्छन्नपिनाशक्नोदित्यर्थः २७ २८ २९

२० भा० तस्योरसि लंबमानं कृष्णं समादाय मात्रे प्रतिहृत्य समर्प्य विस्मिताश्च बभूवुरित्यर्थः विहायसा गगनमार्गेण पुरुषादेन नीतं तथापि मृत्युमुखान्मुक्तं ३० पुनर्लब्धाशिषः मोदं प्रापुरिति ३१ परस्परं हर्षकथामाहुः अहो बतेति निवृत्तिं गमितः मृत्युं प्रापितः कोऽत्र विस्मयः युज्यत एवेत दि

प्रादाय मात्रे प्रतिहृत्य विस्मिताः कृष्णं च तस्योरसि लंबमानं तं स्वस्तिमंतं पुरुषादनीतं विहायसा मृत्युमुखात्प्रमुक्तं ३० गोप्यश्च गोपाः किल नंदमुख्या लब्ध्वा शिषः प्रापुरतीव मोदं अहो बतात्यद्भुतमेष रक्षसा बालो निवृत्तिं गमितोऽभ्यगात्पुनः ३१ हिंस्रः स्वपापेन विहिंसितः खलः साधुः समत्वेन भयाद्विमुच्यते ३२ किं नस्तपश्चीर्णमधोक्षजार्चनं पूर्तेष्टदत्तमुत भूतसौहृदं यत्संपरेतः पुनरेव बालको दिष्ट्या स्वबंधून्प्रणयन्नुपस्थितः ३३ दृष्ट्वाद्भुतानि बहुशो नंदगोपो बृहद्वने वसुदेववचो भूयो मानयामास विस्मितः ३४ एकदार्भकमादाय स्वांकमारोप्य भामिनी प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ३५ पीतप्रायस्य जननी सा तस्य रुचिरस्मितं मुखं लालयती राजन्जृंभतो ददृशे इदं ३६ खं रोदसी ज्योतिरनीकमाशाः सूर्येंदुवह्निश्वसनांबुधींश्च द्वीपान्नगांस्तद्दुहितॄर्वनानि भूतानि यानि स्थिरजंगमानि ३७ ॥ तिनेष्वेव केचिदाहुः हिंस्र इति ३२ नः अस्माभिः चीर्णं कृतं पूर्तं वापीकूपादिनिर्माणं इष्टं पंचयज्ञाग्निहोत्रादि दत्तं दानं यद्यस्मात्तपश्चादेः प्रणयन्हर्षयन् ३३ ३४ ३५ तृणावर्तागमे दृष्ट्वा गौरवाशंकिनी प्रसूं बोधयन्दर्शयामास जृंभमाणो मुखे जगत् १ पीतप्रायस्य पीतप्रायः स्तनो येन तस्य ३६ नगान्

३८ इतिदशमेसप्तमोऽध्यायः ७ अष्टमेनामकर्मास्यवालक्रीडाकुतूहले मृद्भक्षणादियोगेचविश्वरूपंनिरूप्यते १ विश्वरूपादि
वालस्यनिशम्याशंकिनः पितुः नामकृद्गर्गवाक्येननिजंतत्वमसूसुचत् २३ पूर्णश्चेत्कथंधनिनांगृहमागतस्तत्राह महद्विचलन
मिति महतांस्वाश्रमादन्यत्रविचलनंनस्वार्थेकिंतुगृहिणांमंगलाय ननुतर्हितएवमहद्दर्शनार्थंकिमितिनागच्छंतितत्राह दीन

सावीक्ष्यविश्वंसहसाराजन्संजातवेपथुः संमील्यमृगशावाक्षीनेत्रेआसीत्सुविस्मिता ३८
इतिश्रीभागवतेमहापुराणेदशमस्कंधेतृणावर्तवधोनामसप्तमोऽध्यायः ७ श्रीशुकउवा
च गर्गः पुरोहितोराजन्यदूनांसुमहातपाः व्रजंजगामनंदस्यवसुदेवप्रचोदितः १ तंदृष्ट्वा
परमप्रीतः प्रत्युत्थायकृतांजलिः आनर्चाधोक्षजधियाप्रणिपातपुरःसरं २ सूपविष्टं
कृतातिथ्यंगिरासूनृतयामुनिं नंदयित्वाऽब्रवीद्ब्रह्मन्पूर्णस्यकरवामकिं ३ महद्विचल
नंनॄणांगृहिणांदीनचेतसां निःश्रेयसायभगवन्कल्पतेनान्यथाक्वचित् ४ ज्योतिषा
मयनंसाक्षाद्यत्तज्ज्ञानमतींद्रियं प्रणीतंभवतायेनपुमान्वेदपरावरं ५ ॥ चेतसांकृपणानांक्ष

णमपिगृहंत्सुकुमशक्नुवतामित्यर्थः ४ त्वयावालयोर्नामकरणादिकरणीयमितिवक्तुंतस्यज्ञानातिशयमाह ज्योतिषामयनमिति
यदतींद्रियज्ञानसाधनंज्योतिषामयनंतत्प्रतिपादकंज्योतिःशास्त्रमित्यर्थः तत्साक्षाद्भवताप्रणीतं येनान्योपिपुमान्परावरंपरंकारणं
पूर्वजन्मकृतंकर्म अवरंकार्यं अस्मिन्जन्मनिभाविफलंतद्वेद उक्तंचजातके यदुपचितमन्यजन्मनिशुभाशुभंतस्यकर्मणाप्राप्तिं

भा॰ द॰ स्कं॰ २७

विवक्षितमाह त्वंहीति देवज्ञोमंत्रविच्चत्वं अतोनामकरणादिसंस्कारान्कर्तुमर्हसीत्यर्थः नन्वेतद्गुरुणाकरणीयमितिचेत्
तत्राहन्टणामिति ६ अस्तुत्साहिनेनंदंप्रतिगुप्तमेततत्कार्य्यमित्यभिप्रायेणप्रत्याचक्षाणइवाह यदूनामिति भवतुनथापित्वम
आगतइतिकेत्रविद्यादितिचेदतआह ख्यातश्चेति ततःकिमतआह सुतमितिकंसोमन्यतेमन्येतकल्पयेदित्यर्थः ७ ननुयदुकुमा
रइतिकथंविज्ञानात्तुमत्र वसुदेवस्यपुत्रस्तत्रापिदेवक्यांजातइतिकुतोजानीयात्तत्राहकंसःपापमतिरित्यादि ८ किंम

त्वंहिब्रह्मविदांश्रेष्ठःसंस्कारान्कर्त्तुमर्हसि बालयोरनयोर्न्टणांजन्मनाब्राह्मणोगुरुः ६
श्रीगर्गउवाच यदूनामहमाचार्यःख्यातश्चभुविसर्वदा सुतंमयासंस्कृतंतेमन्यतेदेवकीसु
तं ७ कंसःपापमतिःसख्यंतववचानकदुंदुभेः देवक्याअष्टमोगर्भोनस्त्रीभवितुमर्हति ८
इतिसंचिंतयन्श्रुत्वादेवकीदारिकावचः अपिहंतागताशंकस्तर्हितन्नोऽनयोभवेत् ९॥
नंदउवाच अलक्षितोस्मिन्रहसिमामकैरपिगोव्रजे कुरुद्विजातिसंस्कारंस्वस्तिवाचनपू
र्वकं १० श्रीशुकउवाच एवंसंप्रार्थितोविप्रःस्वचिकीर्षितमेवतत् ॥ चकारनामकरणं
गूढोरहसिबालयोः गर्गउवाच ११

याहतयामंदेत्यादिदेवकीकन्यावचः श्रुत्वादेवक्याअष्टमोगर्भोनस्त्रीभवि
तुमर्हतीतिचनित्यंसंचिंतयन्सामान्येनकाचिदस्तीतिज्ञात्वायुवयोश्चसख्यंसंचिंतयनत्वद्गृहेभवेदितिसंभाव्य मत्संस्कारलिंगे
नचआगताशंकः आगताशंकायस्यसः अपियदिहंताहनिष्यतितर्हितत्तदानोमहान् अनयःस्यादिति ९ द्विजातिसंस्कारं
॥ द्विजातीनामवश्यंकर्त्तव्यंसंस्कारमात्रंकेवलंस्वस्तिवाचनपूर्वकंकुर्विति १०।११॥

एमः २७

यदूनामपृथग्भावात्कुतश्चिद्धेतोर्विप्रतिपद्यमानानांयदूनामपृथग्भावात् भावोभवनंतस्मात् अन्योन्यशिक्षयासर्वैक
मत्यकरणादित्यर्थः सम्यक्कर्षतिएकीकरोतिइतिसंकर्षणमप्युशंतिमन्यंतेवक्ष्यंतीत्यर्थः गर्भसंकर्षणंतुनप्रकाशयति
१२ अस्यतवपुत्रस्यअतः श्रीदत्तमइत्येकंनामभविष्यति १३ प्रागयमितिसामान्योक्त्याऋषिरयंजन्मांतरगतंनामकथय

अयंहिरोहिणीपुत्रोरमयन्सुहृदोगुणैः आख्यास्यतेरामइतिबलाधिक्याद्बलंविदुः य
दूनामपृथग्भावात्संकर्षणमुशंत्युत १२ आसन्वर्णास्त्रयोह्यस्यगृह्णतोऽनुयुगंतनूः शु
क्लोरक्तस्तथापीतइदानींकृष्णतांगतः १३ प्रागयंवसुदेवस्यक्वचिज्जातस्तवात्मजः वासु
देवइतिश्रीमानभिज्ञाः संप्रचक्षते १४ बहूनिसंतिनामानिरूपाणिचसुतस्यते गुणकर्मा
नुरूपाणितान्यहंवेदनोजनाः १५ एषवः श्रेयआधास्यत्गोपगोकुलनंदनः अनेनसर्व
दुर्गाणियूयमंजस्तरिष्यथ १६ पुरानेनव्रजपतेसाधवोदस्युपीडिताः अराजकेरक्ष्यमाणा
जिग्युर्दस्यून्समेधिताः १७ यएतस्मिन्महाभागाः प्रीतिंकुर्वंतिमानवाः नारयोऽभिभवंत्येतान्

तीतिनंदोमन्यतेस्मअतएनंवासुदेवइतिसंप्रचक्षतइति १४ गुणानुरूपाणिईश्वरः ऽ विष्णुपक्षानिवासुराः १८
सर्वज्ञइत्यादीनिकर्मानुरूपाणिगोपतिर्गोवर्द्धनोद्धरणइत्यादीनितानिसर्वाण्यहमपिनोवेदजनाअपिनोविदुरिति १५ जात
कफलमाह एषइति आधास्यत् आधास्यति अनेनरक्षमाणास्समेधिताश्चदस्यून्जिग्युरिति १६ । १७ । १८ ॥ ६ ॥

१९ इतिच आत्मानंप्रतिसमादिश्य आत्मानंकृत्स्नंवा आशिषां आशीर्भिः २० बालक्रीडाचमत्कारैः कृष्णोरामेणसंयुतः परमा
नंदमाधत्तव्रजेनंदयशोदयोः १ पूर्णत्वमेवदर्शयन्नाह कालेनेति २१ अनुकृष्यपुनःपुनराकृष्यसरीसृपंतौ अतिशयेनचलंतौ
कथंघोषाः कटिपादभूषणकिंकिराएस्तेषांप्रघोषेणरुचिरंयथास्यात्तथा तेषां नादेनहृष्टंमनोययोस्तौलोकंइतस्ततोगच्छंतंजनं

तस्मान्नंदात्मजोऽयंतेनारायणसमोगुणैः श्रियाकीर्त्यानुभावेनगोपायस्वसमाहितः १९॥
इत्यात्मानंसमादिश्यगर्गेचस्वगृहंगते नंदःप्रमुदितोमेनआत्मानंपूर्णमाशिषां २० कालेन
व्रजताऽल्पेनगोकुलेरामकेशवौ जानुभ्यांसहपाणिभ्यांरिंगमाणौविजह्रतुः २१ तावंघ्रियुग्म
मनुकृष्यसरीसृपंतौघोषप्रघोषरुचिरंव्रजकर्दमेषु तन्नादहृष्टमनसावनुसृत्यलोकंमुग्ध
प्रभीतवदुपेयतुरंतिमात्रोः २२ तन्मातरौनिजसुतौघृणयास्नुवंत्यौपंकांगरागरुचिरावुपगूह्य
दोर्भ्यां दत्वास्तनंप्रपिबतोःस्ममुखंनिरीक्ष्यमुग्धस्मिताल्पदशनं ययतुःप्रमोदं २३ यर्ह्यंगना
दर्शनीयकुमारलीलावंतर्व्रजेतदबलाःप्रगृहीतपुच्छैः ॥ अनुसृत्यत्रिचतुराणिपदानिअनुगम्यमुग्ध
वत्प्रभीतवत्मात्रोरंतिसमीपेयतुर्जग्मतुः २२ तदाचतन्मातरौनिजसुतौदोर्भ्यामुपगुह्यप्रमोदंययतुःकथंभूते घृणयाकृ
पयास्नुवंत्यौपयः पूर्णपयोधरेसत्यौपंकेनांगरागेणचरुचिरौ कथंभूतंमुखंनिरीक्ष्यमुग्धंमंदस्मितंयस्मिन्अल्पादशनाश्च
यस्मिन्तच्चतच्च २३ यर्हिअंगनानांदर्शनीयाकुमारलीलाययोस्तथाभूतौजातौतदाअंतर्व्रजेव्रजस्यमध्येतदबलाव्रजांगनास्तौ

प्रेक्षमाणाः विसृज्यगृहकृत्याः हसंत्योजहृषुः हृष्टावभूवुः कथंभूतौताभ्यांप्रगृहीतानिपुच्छानियेषांतैर्वत्सैरितस्ततः अनुकृ
ष्यमाणौ २४ अतिचपलौतौशृंग्यादिभ्योनिषेद्धुंगृहोचितानिकर्माणिचकर्तुंयत्रयदातज्जनन्यौनशेकाते तदाऽलंमनसोऽनव
स्थामापतुरितिगृहसौख्यस्यपराकाष्ठादर्शिता २५ २६ २७ २८ कृष्णचापल्यचौर्याणिसहैवाखिलसद्मतः प्रजल्पंत्यः समा

वत्सैरितस्ततउभावनुकृष्यमाणौप्रेक्षंत्यउज्झितगृहाजहृषुर्हसंत्यः २४ शृंग्यग्निदंष्ट्र्यसि
जलद्विजकंटकेभ्यः क्रीडापरावतिचलौस्वसुतौनिषेद्धुं गृह्याणिकर्तुमपियत्रनतज्जनन्यौ
शेकातआपतुरलंमनसोऽनवस्थां २५ कालेनाल्पेनराजर्षेरामःकृष्णश्चगोकुले अघृष्टजा
नुभिः पद्भिर्विचक्रमतुरंजसा २६ ततस्तुभगवान्कृष्णोवयस्यैर्व्रजबालकैः सहरामोव्रजस्त्री
णांचिक्रीडेजनयन्मुदं २७ कृष्णस्यगोप्योरुचिरंवीक्ष्यकौमारचापलं शृण्वंत्याःकिलतन्मा
तुरितिहोचुः समागताः २८ वत्सान्मुंचन्क्वचिदसमयेक्रोशसंजातहासः स्तेयंस्वाद्वत्त्यथद
धिपयःकल्पितैःस्तेययोगैः मर्कान्भोक्ष्यन्विभजतिसचेन्नात्तिभांडंभिनत्तिद्रव्यालाभेसगृहकु
पितोयात्युपक्रोश्यतोकान् २९
गत्यगोप्योगोप्येमुदंददुः १ असमयेअदोहकालेक्रोशेसंजातहासः स्तेयंचौर्य्यात्
र्जितंनतुदत्तं तत्रापिस्वादुनेतरत् दधिचपयश्चदधिपयः अत्तिकिंचभोक्ष्यन्मर्कान्मर्कटान् प्रतिविभज्यददातितेषांमध्येतृप्त
त्वेनकोपिनात्तिचेत्तर्हिभांडंभिनत्ति कचिद्द्रव्यस्यअलाभेसतिसःगृहायधक्ष्यामीत्येवंकुपितोयाति यदासगृहागृहिणस्तेभ्यःकुपितस्सं

पातोकानपर्यंतंकालिकधृष्णुनंदकोश्यपकोशोप्रमिलायनीति ॥२८॥

कल्पितैस्तेययोगैरित्युक्तं नतमपं चयति हस्ताग्राह्य इति तुंगशिक्यस्थभांडेषु अंतर्निहिते दध्यादौ वयुनं ज्ञानं यस्य सः छिद्रं रचयति तद्धित छिद्ररचनादिवित् ध्वांतयुक्ते गृहे स्वांगमेवार्थप्रदीपं रचयति विशेषतो धृतमणिगणं यर्हि यस्मिन्काले ३० रे रे चौर इत्याक्रुष्टः सन् उशतिजल्पति त्वमेव चोरः अहं गृहस्वामीत्यादीनि धार्ष्ट्यानि प्रागल्भ्यानि अथवा उशति भो कमनीययशोदे यद्वा उशति वास्तोस्वार्चिते

हस्ताग्राह्ये रचयति विधिं पीठकोलूखलाद्यैश्छिद्रं ह्यंतर्निहितवयुनः शिक्यभांडेषु तद्वित् ।
ध्वांतागारे धृतमणिगणं स्वांगमर्थप्रदीपं काले गोप्यो यर्हि गृहकृत्येषु सुव्यग्रचित्ताः ३० ए
वं धार्ष्ट्यान्युशति कुरुते मेहनादीनि वास्तौ स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथास्ते इ
त्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभिर्व्याख्यातार्था प्रहसितमुखी न ह्युपालब्धुमैच्छ
त् ३१ एकदा क्रीडमानास्ते रामाद्या गोपदारकाः कृष्णो मृदं भक्षितवानिति मात्रे न्यवेदय
न् ३२ सा गृहीत्वा करे कृष्णमुपालभ्य हितैषिणी यशोदा भयसंभ्रांतप्रेक्षणाक्षमभाषत ३३
कस्मान्मृदमदांतात्मन् भवान्भक्षितवान् रहः वदंति तावका ह्येते कुमारास्तेऽग्रजोऽप्ययं ३४

गृहे मेहनादीनि पुरीषोत्सर्गादीनि कुरुते एवं स्तेयोपायैर्विरचिता कृतिः कर्म येन सः त्वत्समीपे सुप्रतीकः साधुरिवास्ते सभयेन यने यस्मिन् तच्च तत् श्रीयुक्तं मुखं च तदालोकिनीभिः व्याख्यातार्था प्रख्यापितकर्मफला उपालब्धुं आक्षेप्तुं नैच्छत् ३१ कदाचिदपराधांतरे उपालभनतदा तु महदाश्चर्यमभूदिति कथयन्नाह एकदेति ३२ उपालभ्य निर्भर्त्स्य भयेन संभ्रांतप्रेक्षणे चपलनिरीक्षणे अक्षिणी यस्य

नाहंभक्षितवानितिनहिवाह्यंकिंचिन्मयाभक्ष्यतेमत्कुक्षावादावेवसर्वमस्तीतिभावः समक्षंप्रत्यक्षं ३५ व्यादेहिमुखंप्रसारयेतिव्या
दत्तप्रसारितवान् ३६ तत्रतस्मिन्मुखेविश्वंददृशेददर्शतत्प्रपंचयतिजगत्जंगमंस्थास्नुस्थावरंखंअंतरिक्षलोकं साद्रिद्वीपाब्धिभू
गोलंपर्वतद्वीपसमुद्रसहितंभूगोलंभूर्लोकंवायुःप्रवहः अग्निर्वैद्युतइंदुश्चतारकाश्चतत्सहितं ३७ ज्योतिश्चक्रंस्वर्लोकंवैका
रिकाणिदेवाः मनइतिवैकारिकशब्देनगृहीतमपिदेववैलक्षण्यात् पुनरुक्तंइंद्रियाणिचतैजसानिमात्रास्तामसाः शब्दाद
यः ३८ एवमेतद्विचित्रंविश्वंसहएकदेववीक्ष्यविचित्रतामाह जीवश्चगुणक्षोभकःकालश्चपरिणामहेतुः स्वभावश्चजन्म

नाहंभक्षितवानंबसर्वेमिथ्याभिशंसिनः यदिसत्यगिरस्तर्हिसमक्षंपश्यमेमुखं ३५ यद्ये
वंतर्हिव्यादेहीत्युक्तःसभगवान्हरिः व्यादत्ताऽव्याहतैश्वर्यःक्रीडामनुजबालकः ३६ सा
तत्रददृशेविश्वंजगत्स्थास्नुचखंदिशः साद्रिद्वीपाब्धिभूगोलंसवाय्वग्नींदुतारकं ३७ ज्योति
श्चक्रंजलंतेजोनभस्वान्वियदेवच वैकारिकाणींद्रियाणिमनोमात्रागुणास्त्रयः ३८ एतद्वि
चित्रंसहजीवकालस्वभावकर्माशयलिंगभेदं सूनोस्तनौवीक्ष्यविदारितास्येव्रजंसहात्मानमा
वापशंकां ३९ किंस्वप्नएतदुतदेवमायाकिंवामदीयोवतबुद्धिमोहः ५ हेतुःकर्मचतत्संस्कारः आशयश्च

एतैर्लिंगानांचराचरशरीराणांभेदोयस्मिनतत् तत्रव्रजंचसहात्मानंस्वसहितंकाचिद्वीक्ष्यसूनोस्तनौ अल्पेविदारिते आस्ये
शंकामवाप ३९ तामेवाह किंस्वप्नइतिपरितोविलोक्याह नायंस्वप्नस्तर्हिकिंदेवस्यहरेर्मायातथाचेत् अन्येकिन्नपश्यंतितन
र्हिकिंवामदीयएवकश्चिद्बुद्धिमोहः विपर्यासःदर्पणमुखवत् एवंतर्हिअयंकस्योपिकथमंतःप्रतीयते॥ ३ ॥ ३ ॥ ३ ॥

अंतर्बहिश्चैकरूपेण च कथं जगत्प्रतीयते तथा सति विंबप्रतिविंबयोरिव परस्परं वैपरीत्येन प्रतीतिः स्यादित्याशंक्यान्यथावि
तर्कयति अथो इति अथवा मम माऽमुष्या अर्भकस्यापि सतो यः कश्चनाचिंत्य आत्मयोगः स्वीयमैश्वर्यमौत्पत्तिकः स्वाभाविकः
४० चरमं पक्षमाश्रित्याऽयमीश्वर इति निश्चित्याह अथो इति चेतः चित्तं चित्तादिभिर्न वितर्कगोचरं जगत् यदाश्रयं यद
धिष्ठानं येनैक स्याधिष्ठात्रा यतः बुद्धिवृत्त्यभिव्यक्तात् . नन्विदमवितर्क्यं भवतु तत्पदं कीदृगत आह सुदुर्विभाव्यं इदम

अथां अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः ४० अथो यथावन्न वितर्कगोच
रं चेतो मनः कर्मवचोभिरंजसा यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणतास्मि तत्पदं ४१
अहं ममासौ पतिरेष मे सुतो व्रजेश्वरस्याखिलवित्तपा सती गोप्यश्च गोपाः सह गोधनाश्च मे यन्मा
य इत्थं कुमतिः स मे गतिः ४२ इत्थं विदिततत्त्वायां गोपिकायां स ईश्वरः वैष्णवीं व्यतनोन्मायां पु
त्रस्नेहमयीं विभुः ४३ सद्यो नष्टस्मृतिर्गोपी सारोप्यारोहमात्मजं प्रवृद्धस्नेहकलिलहृदयासीद्य
था पुरा ४४ त्रय्या चोपनिषद्भिश्च सांख्ययोगैश्च सात्वतैः ॥ त्यं तमचिंत्यमित्यर्थः ४१ एवं प्रपंचप्रतीत्यो।

नीं तत्त्वं पुनर्जीवसंसृतिहेतुमायाश्रयत्वेनोन्नयंत्याह अहमिति यशोदानामाहं असौ मम पतिः अमुष्य व्रजेश्वरस्या
खिलवित्तपाधिष्ठात्री अहं सती जाया एष च मे सुतः गोप्यादयश्च मदीया इतीत्थं कुमतिर्यन्मायया स एष मे शरणमिति ४२
वैष्णवीं स्वीयाम् ४३ प्रवृद्धेन स्नेहेन कलिलं व्याप्तं हृदयं यस्याः सा पुरेवासीत् ४४ मायाबलोद्रेकमाह त्रय्येति ॥ ६ ॥ ६ ॥

त्रय्याकर्मकांडरूपया इंद्रादिरूपेण उपनिषद्भिर्ब्रह्मेति सांख्यैः पुरुष इति योगैः परमात्मेति सात्वतैर्भगवानिति उपगीयमानं मा
हात्म्यं यस्य तं ४५ अतिविस्मयेन पृच्छति नंद इति महोदयं महानुदय उद्भवो यस्य तत् ४६ ययोः प्रसन्नोऽवतीर्णस्तौ पितरावपि य
न्नान्वविंदेतां न प्रापतुः तां कृष्णस्योदारां महत् अर्भकेहितं बाललीलां यच्च कवयो गायंति तत्तयोऽविंदत्त किं श्रेयोऽकरोदिति ४७ ब्रह्म

उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजं ४५ राजोवाच नंदः किमकरोद्ब्रह्मन् श्रेय एवं
महोदयं यशोदा च महाभागा पपौ यस्याः स्तनं हरिः ४६ पितरौ नान्वविंदेतां कृष्णोदारार्भके
हितं गायंत्यद्यापि कवयो यल्लोकशमलापहं ४७ श्रीशुक उवाच द्रोणो वसूनां प्रवरो ध
रया सह भार्यया करिष्यमाण आदेशान् ब्रह्मणस्तमुवाच ह ४८ जातयोर्नौ महादेवे भुवि
विश्वेश्वरे हरौ भक्तिः स्यात् परमा लोके ययांजो दुर्गतिं तरेत् ४९ अस्त्वित्युक्तः स भगवान्
व्रजे द्रोणो महायशाः जज्ञे नंद इति ख्यातो यशोदा सा धराऽभवत् ५० ततो भक्तिर्भगवति पु
त्रीभूते जनार्दने दंपत्योर्नितरामासीत् गोपगोपीषु भारत ५१ कृष्णो ब्रह्मण आदेशं सत्यं कर्तुं
व्रजे विभुः सहरामो वसंश्चक्रे तेषां प्रीतिं स्वलीलया ५२ ॥

ण आदेशान् गोपालत्वादिलक्षणान् ४८ ४९
स एव ह द्रोणो जज्ञे स च नंद इति ख्यातः सा च धरा यशोदाऽभवत् ५० गोपगोपीनामपि वस्तुस्वभावादस्त्येव भक्तिस्तयोः पु
नर्नितरामिति ५१ स्वलीलया पुत्रभावानुकारिण्या ५२ ॥ ६ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥

इतिश्रीभागवतेदशमस्कंधेविश्वरूपदर्शनोनामाष्टमोध्यायः ८ श्रीसुकउवाच एकदागृहदासीषुयशोदानंदगेहिनी कर्मांतरनियुक्तासुनिर्ममंथस्वयंदधि १ यानियानीह गीतानितद्बालचरितानिच· दधिनिर्मंथनेकालेस्मरंतीतान्यगायत २ क्षौमंवासःपृथुकटितटेबिभ्रतीसूत्रनद्धंपुत्रस्नेहस्नुतकुचयुगंजातकंपंचसुभ्रूः रज्ज्वाकर्षश्रमभुजचलत्कंकणौकुंडलेचस्विन्नंवक्त्रंकबरविगलन्मालतीनिर्ममंथ ३ तांस्तन्यकामआसाद्यमथ्नंतींजननींहरिः गृहीत्वादधिमंथानंन्यषेधत्प्रीतिमावहन् ४ तमंकमारूढमपाययत्स्तनंस्नेहस्नुतंसस्मितमीक्षतीमुखं अतृप्तमुत्सृज्यजवेनसाययावुत्सिच्यमानेपयसित्वधिश्रिते। ५ संजातकोपःस्फुरितारुणाधरंसंदश्यदद्भिर्दधिमंथभाजनं भित्वामृषाश्रुर्दृषदश्मनारहोजघासहैयंगवमंतरंगतः ६ उत्तार्यगोपीसुश्रृतंपयःपुनः प्रविश्यसंदृश्यचदध्यमत्रकं॥ ६॥

१ सूत्रनद्धंकांचीवद्धम रज्ज्वाआकर्षणश्रमोययोस्तयोर्भुजयोश्चलंतौकंकणौच कबराद्विगलंत्योमालत्योयस्याःसा ३ ४ अधिश्रितेचुल्लीमारोपितेउत्सिच्यमानेअतितापेनोद्रिच्यमाने ५ दृषदश्मनाशिलापुत्रेणअंतरंगृहमध्यंगतः रहःएकांतेनवनीतमभक्षयत ६ सुश्रृतं

मा० द० पू० ३२

इतिदशमस्कंधेसप्तमोध्यायः ८ नवमेपयउत्सिक्तेगत्वागोप्यथतत्कृतं विलोक्यभांडभंगादिकृष्णंदाम्नाववंधतं १ तनूदरश्रितंविश्वंदृष्ट्वाविस्मितचेतसः बंधनद्व्यंगुलापूर्त्यापूर्णतामन्वदर्शयत् २ स्वयंदधिनिर्ममंथ १ तदाचागायतेतिचकारान्वयः

दशमे० ९

अंतर्गृहमध्यंगतः ... [illegible]

पविश्यभिन्नं संदृश्य दृष्ट्वा ७ उलूखलांघ्रेः परिवर्जितस्यो लूखलस्योपरि शिचि शिक्ये चौर्येण विशंकिते चंचले ईक्षणे यस्य तं सुत
म् ८ तपसा ऐकाग्र्येण ईरितं तत्तदाकारतां नीतं अतएव क्षमं योग्यं प्रवेष्टुं योगिनां मनोपि यं नाप तं अथवा अन्वधावत् केवलं न त्वापय
तो योगिनां मनोपि यं प्रवेष्टुं न क्षममिति ९ अन्वंचमाना एवं क्रमसमनुगच्छंती बृहत्योश्चलंत्योः श्रोण्योर्भरेणाक्रांता स्तब्धा गतिर्यस्याः

भग्नं विलोक्य स्वसुतस्य कर्म तज्जहास तं चापि न तत्र पश्यती ७ उलूखलांघ्रेरुपरि व्यवस्थितं म
र्काय कामं ददतं शिचि स्थितं हैयंगवं चौर्यविशंकितेक्षणं निरीक्ष्य पश्चात्सुतमागमच्छनैः ८
तामात्तयष्टिं प्रसमीक्ष्य सत्वरस्ततोवरुह्यापससार भीतवत् गोप्यन्वधावन्न यमाप योगिनां
क्षमं प्रवेष्टुं तपसेरितं मनः ९ अन्वंचमाना जननी बृहच्चलच्छ्रोणीभराक्रांतगतिः सुमध्यमा
जवेन विस्रंसितकेशबंधनच्युतप्रसूनानुगतिः परामृशत् १० कृतागसं तं प्ररुदंतमक्षिणी क
षंतमंजन्मषिणी स्वपाणिना उद्वीक्षमाणं भयविह्वलेक्षणं हस्ते गृहीत्वा भिषयंत्यवागुरत्
११ त्यक्त्वा यष्टिं सुतं भीतं विज्ञायार्भकवत्सला इयेष किल तं बद्धुं दाम्नातद्वीर्य्यकोविदा १२॥

सा विस्रंसितात् केशबंधात् च्युतैः प्रसूनैरनुगतिरनुगमनं यस्याः सा यद्वा जवेन कंपितात् केशबंधात् पुरः पतितानि प्रसूनानि अनुप
श्चात् गतिर्यस्याः सा परामृशत् धृतवती १० अंजन्मषिणी अंजनी सर्वतः प्रसरंती मषी ययोस्ते अक्षिणी स्वपाणिना कर्षंतं संमर्दयंतं
भिषयंती हृस्वश्छांदसः भीषयंती भयमुत्पादयंती अवागुरत् अभर्त्सयत ११ इयेष ऐच्छत् अतद्वीर्यकोविदा तत्प्रभावानभिज्ञा १२

भा० १० अकोविदत्वमेवाह नचांतरिति पंचभिः वंधनंहिबहिः परिवेष्टनेनदाम्नांऽतरावृतस्यभवतितथाचपूर्वोपरविभागवतोवस्तुनः
पू० पूर्वेणोदामधृत्वापरितः परिवेष्टनेनभवतिनत्वेतदस्तीत्याह नचांतरिति किंचव्यापकेनव्याप्यस्यबंधोभवतितच्चविपरीतमित्या
३२ ह पूर्वापरमिति किंचतद्व्यतिरिक्तस्यचाभावात्तनवंधइत्याहजगच्चयइति १३ तंमर्त्यलिंगमधोक्षजमात्मजंमत्वाववंध॥

नचांतर्नवहिर्यस्यनपूर्वंनापिचाऽपरं पूर्वापरंबहिश्चांतर्जगतोयोजगच्चयः १३ तंमत्वा
त्मजमव्यक्तंमर्त्यलिंगमधोक्षजं गोपिकोलूखलेदाम्नाववंधप्राकृतंयथा १४ तद्दामव
ध्यमानस्यस्वार्भकस्यकृतागसः द्व्यंगुलोनमभूत्तेनसन्दधेऽन्यच्चगोपिका १५ यदासी
त्तदपिन्यूनंतेनान्यदपिसंदधे तदपिद्व्यंगुलंन्यूनंयद्यदादत्तवंधनं १६ एवंस्वगेहदामा
नियशोदासंदधत्यपि गोपीनांसुस्मयंतीनांस्मयंतीविस्मिताऽभवत् १७ स्वमातुःस्विन्न
गात्रायाःविस्रस्तकवरस्रजः दृष्ट्वापरिश्रमंकृष्णःकृपयाऽसीत्स्वबंधने १८ एवंसंदर्शि
ताह्यंगहरिणाभृत्यवश्यता स्ववशेनापिकृष्णेनयस्येदंसेश्वरंवशे १९ नेमंविरिंचोनभ

॥१४ द्व्यंगुलोनंद्वाभ्यामंगुलाभ्यामूनमपूर्णं १५ १६ स्मितंकुर्वतीनांमध्येस्वयमऽऽवोनश्रीरप्यंगसंश्रया॥
पिहसंतीविस्मयमाप १७ १८ नचैवंस्वातंत्र्यभंगइत्याह एवंसंदर्शितेतिसेश्वरमिदंविश्वंयस्यवशेयदधीनमित्यर्थः १९॥ राम
भगवत्प्रसादमन्येपिभक्तालभंतेइदंत्वतिचित्रमितिसरोमांचितमाह॥ छ॥ छ॥ छ॥ छ॥ छ॥ छ॥ छ॥ छ॥ ३२

नेममितिविरंच्यः पुत्रोपिभवः स्वात्मापिश्रीर्जायापि २० फलितमाह नायमिति देहिनां देहाभिमानिनांतापसादीनांज्ञानिनां निवृत्ता
भिमानानामपीति २१ भक्तैर्बद्धस्याप्यन्यमोचकत्वंवक्तुमाह कस्मत्त्विति २२ २३ इतिदशमस्कंधेनवमोध्यायः ९ दशमेऽपात

प्रसादंल्लेभिरेगोपीयत्तत्प्रापविमुक्तिदात् २० नायंसुखापोभगवान्देहिनांगोपिकासुतः
ज्ञानिनांचात्मभूतानांयथाभक्तिमतामिह २१ कस्मत्तुगृहव्यग्रायांमातरिप्रभुः।
अद्राक्षीदर्जुनौपूर्वंगुह्यकौधनदात्मजौ २२ पुरानारदशापेनवृक्षतांप्रापितौमदात् नल
कूवरमणिग्रीवावितिख्यातौश्रियान्वितौ २३ इतिश्रीभागवतेमहापुराणेदशमस्कंधेगोपी
प्रसादोनामनवमोध्यायः ९ राजोवाच कथ्यतांभगवन्नेतत्तयोःशापस्यकारणं यत्तद्विग
र्हितंकर्मयेनवादेवर्षेस्तमः १ श्रीशुकउवाच रुद्रस्यानुचरौभूत्वासुदृप्तौधनदात्मजौ कैल
लासोपवनेरम्येमंदाकिन्यांमदोत्कटौ २ वारुणींमदिरांपीत्वामदाघूर्णितलोचनौ स्त्रीजनै
रनुगायद्भिश्चेरतुःपुष्पितेवने ३ अंतःप्रविश्यगंगायामंभोजवनराजिनि चिक्रीडतुर्युवतिभि
र्गजाविवकरेणुभिः ४ यदृच्छयाचदेवर्षिर्भगवांस्तत्रकौरव अपश्यन्नारदोदेवौक्षीवाणौसमबु

यद्विगनंतरायमलार्जुनौनतत्वाभ्यांचदेवाभ्यांकस्मःसुनइतीर्य्यते १ यद्विगर्हितंकर्मयेनवादेवर्षेर्भागवतोत्तमस्य ध्यत ५॥
पितमः क्रोधस्तदेनत्कथ्यतामिति १ २ ३ गंगायामंतर्मध्येकथंभूतेअंभोजानांवनानितेषांराजयस्ताःविद्यंतेयस्मिन्तस्मिन् ४ अपश्य

कृतस्तत आह तं दृष्ट्वेति ६ अनुग्रहार्थाय अनुग्रहश्च मदनाशः अर्थश्च श्रीकृष्णदर्शनं तदर्थं इदं वक्ष्यमाणं न ह्यन्य इत्यादि ७ जो
ष्यान् प्रियान् विषयान् जुषतः सेवमानस्य पुंसः श्रीमदात् अन्यः आभिजात्यादिः सत्कुलविद्यादिजनितो मदः अन्यो वा रजोगुणः रजः
कार्य्यः हास्यहर्षादिरूपो न हि तथा बुद्धिभ्रंशः बुद्धिं भ्रंशयतीति तथा किं तु श्रीमद एवेति तदाह यत्रेत्यादि चतुर्भिर्यत्र श्रीमदे ८ ३

तं दृष्ट्वा व्रीडिता देव्यो विवस्त्राः शापशंकिताः वासांसि पर्यधुः शीघ्रं विवस्त्रौ नैव गुह्यकौ ६
तौ दृष्ट्वा मदिरामत्तौ श्रीमदान्धौ सुरात्मजौ तयोरनुग्रहार्थाय शापं दास्यन्निदं जगौ ७ नारद उ
वाच न ह्यन्यो जुषतो जोष्यान् बुद्धिभ्रंशो रजोगुणः श्रीमदादाभिजात्यादिर्यत्र स्त्री द्यूतमास
वः ८ हन्यन्ते पशवो यत्र निर्दयैरजितात्मभिः मन्यमानैरिमं देहमजरामृत्यु नश्वरम् ९ देव
संज्ञितमप्यन्ते कृमिविड्भस्मसंज्ञितं भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः १० देहः कि
मन्नदातुः स्वं निषेक्तुर्मातुरेव च मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा ११ एवं साधारणं दे
हमव्यक्तप्रभवाप्ययं को विद्वानात्मसात्कृत्वा हन्ति जन्तूनृतेऽसतः १२ ॥ मंनश्वरं देहं अजरामृत्यु

अजरश्च अमृत्युश्च यथा तथा मन्यमानैः ९ नरदेव भूदेव संज्ञितमपि श्वादिभिर्भक्षितं विट्संज्ञितं दग्धं भस्मसंज्ञितं अन्यदा
कृमिसंज्ञितं तत्कृते तदर्थं यो भूतध्रुक् द्रोग्धा यतो भूतद्रोहात् निरयो भवति स किं स्वार्थं वेद नैव वेदेत्यर्थः १० इदानीं देहे अहंभावोऽपि
न घटत इत्याह देह इति निषेक्तुः पितुर्मातुः पितुर्वा मातामहस्य पुत्रिकाकरणे ११ अव्यक्तप्रभवाप्ययं अव्यक्तात् प्रभवस्तस्मिन्नेवाप्य

एवंश्रीमदविचेष्टितमुक्त्वातत्प्रतीकारंनिश्चिनोति असतइति परंश्रेष्ठंदारिद्र्यमेवकेवलमितिकुतइत्यतआह आत्मौपम्येनेति
ततोनद्रुह्यतीतिभावः १३ तद्दृष्टांतमाह यथेति मुखम्लान्यादिभिर्लिंगैः सर्वेषांजीवानांसुखदुःखसमेइतिज्ञातवानित्यर्थः १४
किंचदारिद्र्यंमोक्षमपिसाधयतीत्याहदरिद्रइतिश्लोकचतुष्टयेननिरहंस्तंभोनिर्गतअहंकाररूपःस्तंभोयस्मात्सः १५ १६ युज्यंते

असतःश्रीमदांधस्यदारिद्र्यंपरमांजनं आत्मौपम्येनभूतानिदरिद्रःपरमीक्षते १३ यथाकंट
कविद्धांगोजंतोर्नेच्छतितांव्यथां जीवसाम्यंगतोलिंगैर्नतथाऽविद्धकंटकः १४ दरिद्रोनिर
हंस्तंभोमुक्तःसर्वमदैरिह कृच्छ्रंयदृच्छयाप्नोतितद्धितस्यपरंतपः १५ नित्यंक्षुत्क्षामदेहस्य
दरिद्रस्यान्नकांक्षिणः इंद्रियाण्यनुशुष्यंतिहिंसापिविनिवर्तते १६ दरिद्रस्यैवयुज्यंतेसाध
वःसमदर्शिनः सद्भिःक्षिणोतितंतर्षंततआराद्विशुद्ध्यति १७ साधूनांसमचित्तानांमुकुंद
चरणैषिणां उपेक्ष्यैःकिंधनस्तंभैरसद्भिरसदाश्रयैः १८ तदहंमत्तयोर्माध्व्यावारुण्याश्री
मदांधयोः तमोमदंहरिष्यामिस्त्रैणयोरजितात्मनोः १९ यदिमौलोकपालस्यपुत्रौभूत्वा
तमःप्लुतौ नविवाससमात्मानंविजानीतःसुदुर्मदौ २० अतोऽर्हतःस्थावरतांस्यातांनैवं

स्वतएवसंगच्छंतेतर्षंतत्स्पृहां १७ ननुसाधूनामपिधनिकएवप्रियःस्यान्नदरिद्रइतिचेत्तत्राह साधूना॥ ७ यथापुनः॥
मितिधनेनस्तंभोगर्वोयेषांतैः १८ तमोमदंअज्ञानकृतंमदं १९ तमः प्लुतौतमोव्याप्तौ २० शपतिअतोर्हतइति॥ ६ ॥ १ ॥ २ ॥

१०
भा° टी°
पू°
३४

अनुग्रहात्तिस्वातांनैवमित्यादिनामत्प्रसादेनस्मृतिःस्यात् २१ स्वर्लोकतांदेवत्वंपुनर्लब्ध्यातस्मिन्मदनुग्रहाल्लब्धभक्तीभविष्यतइति २२ २३ प्रस्तुतमाहऋषेरिति २४ किमितिसत्यंकर्तव्यंतत्राहदेवर्षिरितियतत्यतः ततः २५ यमयोःयमलयोःसहजातयोरात्मनः कृष्णस्यतन्मध्यप्रवेशमात्रेण २६ अनुसंचतीतिअन्वक् तत्रहेतुःदामोदरेणेतिउत्कलितउत्पाटितःअंघ्रिबंधोमूलबंधो

स्मृतिःस्यान्मत्प्रसादेनतत्रापिमदनुग्रहात् २१ वासुदेवस्यसान्निध्यंलब्ध्वादिव्यशरच्छते वृत्तेस्वर्लोकतांभूयोलब्धभक्तीभविष्यतः २२ श्रीशुकउवाच एवमुक्त्वासदेवर्षिर्गतोनारायणाश्रमम् नलकूबरमणिग्रीवावासतुर्यमलार्जुनौ २३ ऋषेर्भागवतमुख्यस्यसत्यंकर्तुंवचोहरिः जगामशनकैस्तत्रयत्रास्तांयमलार्जुनौ २४ देवर्षिर्मेप्रियतमोयदिमौधनदात्मजौ तत्तथासाधयिष्यामियद्गीतंतन्महात्मना २५ इत्यंतरेणार्जुनयोःकृष्णस्तुयमयोर्ययौ आत्मनिर्वेशमात्रेणतिर्यग्गतमुलूखलं २६ बालेननिष्कर्षयताऽन्वगुलूखलं तद्दामोदरेणतरसोत्कलितांघ्रिबंधौ निष्पेततुःपरमविक्रमितातिवेपस्कंधप्रवालविटपौकृतचंडशब्दौ २७ तत्रश्रियापरमयाककुभःस्फुरंतौसिद्धावुपेत्यकुजयोरिवजातवेदाः

ःपरमयोस्तौपरमस्यश्रीकृष्णस्यविक्रमितंविक्रमस्तेनअतिवेपः कंपोयेषुतेस्कंधप्रवालविटपाययोस्तौ २७ ककुभःप्रतिसर्वतःस्फुरंतावित्यर्थःयद्वादिशःप्रकाशयंतावितिकुजयोर्वृक्षयोःस्थितौऽ॥६॥ छ॥ छ॥ छ॥ छ॥ छ॥ छ॥

ऽग्निर्यथामूर्त्तिमानुपैतितथोपेत्यविरजसौनिर्मदौनिरहंकारिणौनष्टगर्वौवितियावत् २८ ननुगोपालेवालेमांयुवांदेवौकिमि
तिप्रणतावितिचेत्तत्राहतुः हेकृष्णकृष्णमहायोगिन् अचिंत्यप्रभावस्त्वंनवालः किंतुपरःपुरुषः यतः आद्यंकारणभूतः तत्रा
पिननिमित्तमात्रंकिंतुउपादानमपित्वमेवेत्याशयेनतुष्टुवतुः व्यक्ताव्यक्तमिति स्थूलसूक्ष्म—मिदंरूपंतेतवब्राह्मणाः ब्रह्मविदः
विदुः २९ नियंतापित्वमेवेत्यूचतुः त्वमेकइतिदेहः असवःप्राणाआत्माऽहंकारः इंद्रियाणिचतेषामीश्वरः नन्वस्यकालोनिमि

कृष्णंप्रणम्यशिरसाखिललोकनाथंवद्धांजलीविरजसाविदमूचतुःस २८ कृष्णकृष्ण
महायोगिंस्त्वमाद्यःपुरुषःपरः व्यक्ताव्यक्तमिदंविश्वंरूपंतेब्राह्मणाविदुः २९ त्वमेकःस
र्वभूतानांदेहास्वात्मेंद्रियेश्वरः त्वमेवकालोभगवान्विष्णुरव्ययईश्वरः ३० त्वंमहान्प्रकृ
तिःसाक्षाद्रजःसत्वतमोमयी त्वमेवपुरुषोऽध्यक्षःसर्वक्षेत्रविकारवित् ३१ गृह्यमाणैस्त्व
मग्राह्योविकारैःप्राकृतैर्गुणैः कोन्विहार्हतिविज्ञातुंप्राक्सिद्धंगुणसंवृतः ३२ ॥ ६ ॥

त्तंप्रकृतिरुपादानंप्रकृतेर्जातोमहानविश्वात्मतयापरिणमतेपुरुषः कर्त्तानियंताचकिमत्राहमतआहतुः त्वमेवकालइत्यादिना
सोऽहंनयतोभगवानीश्वरोविष्णुस्त्वंअतः कालोनामतवलीला ३० प्रकृतिःशक्तिःपुरुषोंशः महान्कार्यंअतस्त्वमेवसर्वंमित्य
र्थः ३१ नन्वहमेवचेत्सर्वंतर्हिघटादिज्ञानेममज्ञानंकिंनभवतिभवतीतिचेत्सर्वोपिब्रह्मवित्स्यादतआहतुः गृह्यमाणैरितिदृश्यत्वे
नवर्तमानैर्बुद्ध्यहंकारेंद्रियादिभिर्दृष्टात्वंनगृह्यसइतिभावः ननुतर्हिजीवोजानातुनैवेत्याहतुःकोन्विहेति जीवाद्युत्पत्तेःप्रागेवस्वप्र

अतोदुर्विज्ञेयत्वात्केवलंप्रणमतस्तस्मैतुभ्यमिति॰ आत्मनः स्वस्मात् द्योतः प्रकाशोयेषांतैर्गुणैश्छन्नोमहिमायस्य अत्रैरिवरवे
स्तस्मै ३३ अहोअहमीश्वरइतिकुतोज्ञातंतत्राहतुःयस्येति ३४ भवायउद्भवायविभवाय ——— विगतोभवोयस्मिन् तस्मैकै
वल्यायेत्यर्थः ३५ ३६ नौआवां अनुचरः कुवेरोनारदोवातस्यकिंकरौभगवतस्तवदर्शनं ३७ तत्रगतयोरावयोः पूर्वस्वभावो

तस्मैतुभ्यंभगवतेवासुदेवायवेधसे आत्मद्योतगुणैश्छन्नमहिम्नेब्रह्मणेनमः ३३ यस्या
वताराज्ञायंतेशरीरेष्वशरीरिणः तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसंगतैः ३४ सभवान्
सर्वलोकस्यभवायविभवायच अवतीर्णोंशभागेनसांप्रतंपतिराशिषां ३५ नमःपरमक
ल्याणनमःपरममंगल वासुदेवायशांताययदूनांपतयेनमः ३६ अनुजानीहिनौभूमं
स्तवानुचरकिंकरौ दर्शनंनौभगवतऋषेरासीदनुग्रहात् ३७ वाणीगुणानुकथनेश्रव
णौकथायांहस्तौचकर्मसुमनस्तवपादयोर्नः स्मृत्यांशिरस्तवनिवासजगत्प्रणामेदृष्टिःसतांद
र्शनेस्तुभवत्तनूनां ३८ श्रीसुकउवाच इत्थंसंकीर्तितस्ताभ्यांभगवान्गोकुलेश्वरः दाम्नाचो

माभूत्किंतुवाणीगुणानुकथनइत्यादिनः अस्मदोर्द्वयोश्चेतिद्विवचन लूखलेबद्धःप्रहसन्नाहगुह्यकौ ३९
स्यानेबहुवचनं अस्मत्संगिनांसर्वेषामपीतिबहुवचनंवातवनिवासभूतंयज्जगत्तस्यप्रणामेत्वन्निवासभूतंइतिबहु
मानेनजगतःप्रणामेशिरोस्त्वित्यर्थः भवत्तनूनांभवतोमूर्तीनां ३८ संकीर्तितःसंस्तुतः ॥ ३९ ॥ ॥ ॥ ॥

वाग्भिर्नह्यन्योजुषतेजोष्यानित्यादिभिःश्रीविभ्वंशरूपोऽनुग्रहःकृतइति ४० युक्तमेवैतदित्याह साधूनांस्वधर्मवर्त्तिनांसमचि
त्तानांआत्मविदांसुतरांमत्कृतात्मनांमय्यर्पितचित्तानांतेषांकृपाऽतिरेकात्सुतरामित्युक्तं सवितुर्द्दर्शनादक्ष्णोर्यथावंधोनभ
वेत तद्वत ४१ माधान्यादेकस्यसंबोधनंदेहेनलकूबरयुवांतत्तस्मात्सादनंसदनंस्वनिकेतनंमत्परमौसंतौगच्छतं वायुवयोः अपा

श्रीभगवानुवाच ज्ञातंममपुरैवैतदृषिणाकरुणात्मना यच्छ्रीमदांधयोर्वाग्भिर्विभ्वंशोऽनु
ग्रहःकृतः ४० साधूनांसमचित्तानांसुतरांमत्कृतात्मनां दर्शनान्नोभवेद्वंधःपुंसोऽक्ष्णोः
सवितुर्यथा ४१ तद्गच्छतंमत्परमौनलकूबरसादनं संजातोमयिभावोवामीप्सितःपरमो
ऽभवः ४२ श्रीशुकउवाच इत्युक्तौतौपरिक्रम्यप्रणम्यचपुनःपुनः बद्धोलूखलमामंत्र्यजग्म
तुर्दिशमुत्तरां ४३ इतिश्रीभागवतेमहापुराणेदशमस्कंधेयमलार्जुनभंगोनामदशमोध्यायः
श्रीशुकउवाच गोपानंदादयःश्रुत्वाद्रुमयोःपततोरवं तत्राजग्मुःकुरुश्रेष्ठनिर्घातभयशंकिताः
॥१॥भूम्यांनिपतितौतत्रददृशुर्यमलार्जुनौ ॥ ऽऽ क्षितोमयिप्रेमाजातएवअभवःनभवोयस्मिनसः ४२
बद्धोलूखलंवद्धमुलूखलंयस्मिंतं ४३ इतिश्रीभागवतेमहापुराणेदशमस्कंधेदशमोध्यायः १० एकादशेसमागत्यवृंदावनं
मथार्भकैःवत्सान्पालयतानेनहतौवत्सवकासुरौ १ निर्घातोवज्रपातइतिभयेनशंकिताः १तल्लक्ष्यंमत्पक्षतःपुरतोदृश्य

११
भा॰द॰
पू॰
२६

मपिपतनकारणमविज्ञायबभ्रमुः २ लक्ष्यंकारणंतद्दर्शयति उलूखलमिति भ्रमकारणमाह कस्येदंराक्षसादेःकर्म्मकुतोवा
कारणात् अहोआश्चर्य्यमुत्पातइतिकातराःभीताःसंतोबभ्रमुरित्यर्थः ३ मध्यगेनवृक्षयोर्मध्यगतेननकेवलमेतावत् वृक्षा
भ्यांनिर्गतौदिव्यौपुरुषावप्यचक्ष्महिदृष्टवंतोवयमिति ४ केवलंताकिंकानजगृहुरेवमन्येतुसंदेहयुक्ताचित्ताबभूवुरिति ५

बभ्रमुस्तदविज्ञायलक्ष्यंपतनकारणं २ उलूखलंविकर्षंतंदाम्नाबद्धंचबालकं कस्येदं
कुतआश्चर्यमुत्पातइतिकातराः ३ बालाऊचुरनेनेतितिर्य्यग्गतमुलूखलं विकर्षता
मध्यगेनपुरुषावप्यचक्ष्महि ४ नतेतदुक्तंजगृहुर्नघटेतेतितस्यतत् बालस्योत्पाटनं
तयोःकेचित्संदिग्धचेतसः ५ उलूखलंविकर्षंतंदाम्नाबद्धंस्वमात्मजं विलोक्यनंदःप्रह
सद्वदनोविमुमोचह ६ गोपीभिःस्तोभितोऽनृत्यतभगवान्बालवत्क्वचित् उद्गायतिक्व
चिन्मुग्धस्तद्वशोदारुयंत्रवत् ७ बिभर्तिक्वचिदाज्ञप्तःपीठकोन्मानपादुकं बाहुक्षेपंचकु
रुतेस्वानांचप्रीतिमावहन् ८ दर्शयंस्तद्विदांलोकेआत्मनोभृत्यवश्यतां व्रजस्योवाहवै
हर्षंभगवान्बालचेष्टितैः ९ क्रीणीहिभोफलानीतिश्रुत्वासत्वरमच्युतः फलार्थीधान्यमा

भगवन्मायामोहितस्यनंदस्याचरितमाह उलूखलमिति ६ त्रास्यंतेमामितिशंकमा ऽऽदायययौसर्वफलप्रदः १०
नोऽतीवबाल्यमनुकरोतिस्मतदाह गोपीभिरिति स्तोभितःकरतालादिनाप्रोत्साहितः ७ इदमानयेत्याज्ञप्तःआनेतुमसमर्थइ
वबिभर्तिकेवलंपीठादिउन्मानंप्रस्थादिबाहुक्षेपंकरचालनंचतद्विदांचेतिचकारस्यान्वयः ८ ततऐश्वर्य्यविदंतियेतेषां एवंव्र
२६

श्रीमद्भागवत

॥ ११ १२ १३ १४ अशेषादेवाब्रह्मादयः तेषांशेखरंमुकुटमणिः स्ववाटं स्वगृहम ॥ १५ । १६ । १७ । १८

फलविक्रयिणीतस्यच्युतधान्यकरद्वयं फलैरपूरयद्रत्नैः फलभांडमपूरिच १९ सरित्तीरग
तंकृस्नंभग्नार्जुनमथाह्वयत् जन्मर्क्षमद्यभवतोविप्रेभ्योदेहिगाःशुचिः २२ पश्यपश्यव
यस्यांस्तेमातृसृष्टान्स्वलंकृतान् त्वंचस्नातःकृताहारोविहरस्वस्वलंकृतः २३ नोपेया
तांयदाहूतौक्रीडासंगेनपुत्रकौ यशोदांप्रेषयामासरोहिणीपुत्रवत्सला २४ इत्थंयशो
दातमशेषशेखरंमत्वासुतंस्नेहनिबद्धधीर्नृप हस्तेगृहीत्वासहराममच्युतंनीत्वास्ववा
टेकृतवत्यथोदयं २५ क्रीडंतंसासुतंबालैरतिवेलंसहाग्रजं यशोदाजोहवीत्कृसंपुत्र
स्नेहस्नुतस्तनी २६ कृष्णकृष्णारविंदाक्षतातएहिस्तनंपिब अलंविहारैःक्षुत्क्षांतः।
क्रीडाश्रांतोसिपुत्रक २७ हेरामागच्छताताशुसानुजःकुलनंदन प्रातरेवकृताहारस्त
द्भवान्भोक्तुमर्हति २८ प्रतीक्षतेत्वांदाशार्हभोक्ष्यमाणोव्रजाधिपः एह्यावयोःप्रियंधेहि
स्वगृहान्यातबालकाः २९ इत्यानीयगृहंकृष्णंयशोदामंगलार्हणैः अभ्यर्च्यभोजयि।
त्वातुमुदमापयशस्विनी ३० श्रीशुकउवाच गोपवृद्धामहोत्पातानानुभूयबृहद्वने ॥ १ ॥

॥ १९ । २० ॥ खेतुंवृंदावनंगंतुमंतः कृष्णेनयंत्रिताः स्वतंत्राइवनंदाद्यामंत्रमेतममंत्रयन् ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७

२१
भा०द०
पू०
३७

व्रजकार्य्यंगोकुलस्यहितकृत्यं २१ २२ विपदंवीनांपक्षिणांपदंविहारस्थानंवियतन्नभः विगतप्रतिष्ठंवा २३ २४ २५ अन्य
तमोवाकश्चिद्बालः अच्युतेनैवरक्षणमासीत् २६ अरिष्टः अनर्थः इतःस्थानात् २७ पशव्यंपशुभ्योहितंनवानिकाननानिअवं

नंदादयःसमागम्यव्रजकार्य्यममंत्रयन् २१ तत्रोपनंदनामाहगोपोज्ञानवयोधिकः देश
कालार्थतत्ववित्प्रियकृद्रामकृष्णयोः २२ उत्थातव्यमितोस्माभिर्गोकुलस्यहितैषिभिः
आयांत्यत्रमहोत्पाताबालानांनाशहेतवः २३ मुक्तःकथंचिद्राक्षस्याबालघ्न्याबालको
ह्यसौ हरेरनुग्रहान्नूनमनश्चोपरिनापतत् २४ चक्रवातेननीतोऽयंदैत्येनविपदंवियत्
शिलायांपतितस्तत्रपरित्रातःसुरेश्वरैः २५ यन्नम्रियेतद्रुमयोरंतरंप्राप्यबालकः अ
सावन्यतमोवापितदप्यच्युतरक्षणं २६ यावदौत्पातिकोरिष्टोव्रजंनाभिभवेदितः ताव
द्बालानुपादाययास्यामोन्यत्रसानुगाः २७ वनंवृंदावनंनामपशव्यंनवकाननं गोपगो
पीगवांसेव्यंपुण्याद्रितृणवीरुधं २८ तत्तत्राद्यैवयास्यामःशकटान्युंक्तमाचिरं गोधना
न्यग्रतोयांतुभवतांयदिरोचते २९ तच्छ्रुत्वैकधियोगोपाःसाधुसाध्वितिवादिनः व्रजान्
स्वान्स्वान्समायुज्यययूरूढपरिच्छदाः ३० वृद्धान्बालान्स्त्रियोराजन्सर्वोपकरणानिच

तराणिविद्यंतेयस्मिन्तत् २८ २९ एकधियः विप्रतिपत्तिरहिताः व्रजान्शकटव्यूहानरूढाः शकटादिष्वारोपिताःपरिच्छ
३७

मयत्ना: ३३ नूतनैः कुचगतैः कुंकुमैः कांतिर्यासांताः नूतनेषुकुचेषुयत्कुंकुमंतेनकांतिर्यासामितिवा ३४ ३५ व्रजावासं
गोकुलवसतिस्थानं ३६ स्वकालेनतद्योग्यकालेन ३७ कौमारलीलांनिरूपयति अविदूरइत्यादिना ३८ क्षेपणैर्विल्वाम

अनः स्वारोप्यगोपालायत्ताअात्तशराशनाः ३१ गोधनानिपुरस्कृत्यशृंगाण्यापूर्य्यसर्व्व
तः तूर्य्यघोषेणमहतायथुः सहपुरोहिताः ३२ गोप्योरूढरथानूत्नकुचकुंकुमकांतयः
कृष्णलीलाजगुःप्रीतानिष्ककंठ्यःसुवाससः ३३ तथायशोदारोहिण्यावेकंशकटमा
स्थिते रेजतूरामकृष्णाभ्यांतत्कथाश्रवणोन्मुखे ३४ वृंदावनंसंप्रविश्यसर्व्वकालसुखा
वहं तत्रचक्रुर्व्रजावासंशकटैरर्द्धचंद्रवत् ३५ वृंदावनंगोवर्द्धनंयमुनापुलिनानिच वी
क्ष्यासीदुत्तमाप्रीतीराममाधवयोर्नृप ३६ एवंव्रजौकसांप्रीतिंयच्छंतौबालचेष्टितैः क
लवाक्यैः स्वकालेनवत्सपालौबभूवतुः ३७ अविदूरेव्रजभुवःसहगोपालदारकैः चा
रयामासतुर्वत्साननानाक्रीडापरिच्छदौ ३८ क्वचिद्वादयतोवेणूनक्षेपणैःक्षिपतःक्वचि
त् क्वचित्पादैःकिंकिणीभिः क्वचित्कृत्रिमगोवृषैः ३९ वृषायमाणौनर्दंतौयुयुधातेप

लकादिभिः किंकिणीयुक्तैःपादैःक्षिपतस्ताडयतः वत्सपालाएवद्वित्राः कंबलादिपिहिताः वृषरूपम ।। रस्परं ॥
नुकुर्वंतितैःसह ३९ स्वयमपितथैववृषायमाणौनर्दंतौतदनुकारिशब्दान् कुर्वंतौयुयुधातेइत्यर्थः स्तैः ॥७॥७॥

भा० द० स्कं० १०

शर्वैर्जंतून्हंसमयूरादीन् ४० । ४१ मुग्धइवअजानन्निवआसदत्समीपमागमत् ४२ अपरपादाभ्यांसलांगूलंयथाभवति तथागृहीत्वा ४३ ४४ सर्वेषांलोकानामेकौमुख्यौपालकौप्रातराशः प्रातर्भोज्यमन्नंतत्सहितौ ४५ अभ्याशंसमीपं ४६ ।

अनुकृत्यरुतैर्जंतूंश्चेरतुःप्राकृतौयथा ४० कदाचिद्यमुनातीरेवत्सांश्चारयतोःस्वकैः वयस्यैःकृष्णबलयोर्जिघांसुर्दैत्यआगमत् ४१ तंवत्सरूपिणंवीक्ष्यवत्सयूथगतंहरिः दर्शयन्बलदेवायशनैर्मुग्धइवाऽसदत् ४२ गृहीत्वाऽपरपादाभ्यांसहलांगूलमच्युतः भ्रामयित्वाकपित्थाग्रेप्राहिणोद्गतजीवितं ४३ सकपित्थैर्महाकायःपात्यमानैःपपातह तंवीक्ष्यविस्मितावालाःशशंसुःसाधुसाध्विति ४४ देवाश्चपरिसंतुष्टा वभूवुःपुष्पवर्षिणः तौवत्सपालकौभूत्वासर्वलोकैकपालकौ सप्रातराशौगोवत्सांश्चारयंतौविचेरतुः ४५ स्वं स्वंवत्सकुलंसर्वेपाययिष्यंतएकदा गत्वाजलाशयाभ्याशंपाययित्वापपुर्जलं ४६ तेतत्र ददृशुर्वालामहासत्वमवस्थितं तत्रसुर्वज्रनिर्भिन्नंगिरेःशृंगमिवच्युतं ४७ सवैवकोना ममहानसुरोवकरूपधृक् आगत्यसहसाकृष्णंतीक्ष्णतुंडोऽग्रसद्बली ४८ कृष्णंमहाव कग्रस्तंदृष्ट्वारामादयोऽर्भकाः वभूवुरिंद्रियाणीवविनाप्राणंविचेतसः ४९ तंतालुमूलंप्र दहंतमग्निवद्गोपालसूनुंपितरंजगद्गुरोः

। ४७ रामआदिर्येषांतेनतुरामः ४८ । ४९ तुण्डयोश्चंचोर्वीरणवत् ॥

अयं यित्तृणविशेषवत् ५० समीडिरे तुष्टुवुः आनकैः शंखैः संस्तवैः सह ५१ स्वस्थानमागतं प्राणमिव वत्सांश्च प्रणीय एकीकृत्य ५२ अतिप्रियेण प्रीत्या आदृताः सादराः प्रेत्यागतमिव लोकांतरादागतमिव तृषितानि अतृप्तानि अमृतं पिवंतीव ईक्षणानि

चच्छर्द सद्योऽतिरुषाऽक्षतं बकस्तुंडेन हंतुं पुनरभ्यपद्यत ५० तमापतंतं स निगृह्य तुंडयोर्दोर्भ्यां बकं कंससखं सतांपतिः पश्यत्सु बालेषु ददार लीलया मुदावहो वीरणवद्दिवौकसां ५१ तदा बकारिं सुरलोकवासिनः समाकिरन्नंदनमल्लिकादिभिः समीडिरे चानकशंखसंस्तवैस्तद्वीक्ष्य गोपालसुता विसिस्मिरे ५२ मुक्तं बकास्यादुपलभ्य दारका रामादयः प्राणमिवेंद्रियो गणः स्थानागतं तं परिरभ्य निर्वृताः प्रणीय वत्सान्व्रजमेत्य तज्जगुः ५३ श्रुत्वा तद्विस्मिता गोपा गोप्यश्चातिप्रियादृताः प्रेत्यागतमिवौत्सुक्यादैक्षंत तृषितेक्षणाः ५४ अहो बतास्य बालस्य बहवो मृत्यवोऽभवन् अप्यासीद्विप्रियं तेषां कृतं पूर्वं यतो भयं ५५ अथाप्यभिभवंत्येनं नैव ते घोरदर्शनाः जिघांसयैनमासाद्य नश्यंत्यग्नौ पतंगवत् ५६ अहो ब्रह्मविदां वाचो नासत्याः संति कर्हिचित् गर्गो यदाह भगवानन्वभावि तथैव तत् ५७ ॥ नियेषां ते ५३ ५४ अहो इत्यादि श्लोकत्रयस्य इति नंदादय इत्यनेनान्वयः अपि एवमपि तेषामेव अनिष्टमासीत् तैर्यतः पूर्वमन्येषां भयं कृतं ५५ अघोरदर्शना अग्निनामिभवंति न धर्षयंति ५६ गर्गो यदाह तस्मान्नंदात्मजोऽयं तेन नारायणसमो गुणैरित्यादि ५७ ॥ ६ ॥ ६ ॥

भा० द०
पू०
३९

५८ ॥ वत्सयूथगतं हत्वा वत्सदंभासुरं हरिः मुनियूथगतं चाहन्त्रयएवं दंभिनां वकं १ इति दशमे टीकायामेकादशोऽध्यायः ११

॥ ५८ ॥ वत्सयूथगतं हत्वा वत्सदंभासुरं हरिः मुनियूथगतं चाहन्वय एवंदंभिनां वकं १ इतिदशमेटीकायामेकादशोध्यायः ११ ॥ द्वादशेतुमहासर्प्पवपुर्द्धरमघासुरं वत्सपालगिलंक्रुद्धोगलेऽहन्निति वर्ण्यते १ महावकगलक्रीडाकेवलस्यनकौतुकं इतीवाघ

इति नंदादयो गोपाः कृष्णरामकथां मुदा कुर्वंतो रममाणाश्च नाविंदन्भववेदनां ५८ एवंवि

हारैः कौमारैः कौमारं जहतुर्व्रजे निलायनैः सेतुबंधैर्मर्कटोत्प्लवनादिभिः ५९ इति श्रीभा

गवते महापुराणे दशमस्कंधे वत्सबकवधो नामैकादशोऽध्यायः ११ श्रीशुक उवाच क्वचिद्व

नाशाय मनोदधद्व्रजात्प्रातः समुत्थाय वयस्यवत्सपान् प्रबोधयन्शृंगरवेण चारुणा विनि

र्गतो वत्सपुरःसरो हरिः १ तेनैव साकं पृथुकाः सहस्रशः स्निग्धाः सुशिग्वेत्रविषाणवेणवः

स्वान्स्वान्सहस्रोपरिसंख्ययान्वितान्वत्सान्पुरस्कृत्य विनिर्ययुर्मुदा २ कृष्णवत्सैरसंख्या

तैर्यूथीकृत्य स्ववत्सकान् चारयंतोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह ३ फलप्रवालस्त व

कसुमनःपिच्छधातुभिः काचगुंजामणिस्वर्णभूषिता अप्यभूषयन् ४ ॥ ६ ॥ ६ ॥

सुखमुखेसमवप्राविशद्धरिः २ क्वचित्कदाचिद्वनाशाय वने एव प्रथमं भोजनं कर्तुं १ तेनैव शृंगरवेण कृष्णेन च सह पृथुका वालाः

स्निग्धाः स्नेहयुक्ताः शिक्शिक्यं रम्याः शिग्वेत्रादयो येषां ते सहस्राधिकसंख्यायुक्तान्वत्सान् २ ३ काचादिभिः पूर्वं मातृभिर्भू

॥ षिता अपि फलादिभिरात्मानमभूषयन्नित्यर्थः ४ ॥

राम
३९

मुसंतश्चोरयंतः ५ यदि दूरंगतः कृष्णो भवति तर्हीति ६ ध्मांतः वादयंतः भृंगैः सह ७ विच्छायाभिः पक्षिच्छायाभिः कलापिभिर्मयूरैः ८ कीशबालान् वृक्षशाखासु लंबमानानिवानरलांगूलान्याकर्षंतः लांगूलममुंचंतः तैः सह द्रुमानारोहंतः विकुर्वंतः दंतदर्शनभ्रूविजृंभादिभिः तैः सह विकारान्कुर्वंतः पलाशिषु वृक्षेषु प्लवंतः शाखायाः शाखांतरमु

मुसंतोऽन्योन्यशिक्यादीन्ज्ञातानाराच्च चिक्षिपुः तत्रत्याश्च पुनर्दूराद्धसंतश्च पुनर्ददुः ५ यदि दूरंगतः कृष्णो वनशोभेक्षणाय तं अहं पूर्वमहं पूर्वमिति संस्पृश्य रेमिरे ६ केचिद्वेणून्वादयंतो ध्मांतः शृंगाणि केचन केचिद्भृंगैः प्रगायंतः कूजंतः कोकिलैः परे ७ विच्छायाभिः प्रधावंतो गच्छंतः साधुहंसकैः बकैरुपविशंतश्च नृत्यंतश्च कलापिभिः ८ विकर्षंतः कीशबालानारोहंतश्च तैर्द्रुमान् विकुर्वंतश्च तैः साकं प्लवंतश्च पलाशिषु ९ साकं भेकैर्विलंघंतः सरित्प्रस्रवसंप्लुताः विहसन्तः प्रतिच्छायाः शपंतश्च प्रतिस्वनान् १० इत्थं सतां ब्रह्मसुखानुभूत्या दास्यं गतानां परदैवतेन मायाश्रितानां नरदारकेण साकं विजह्रुः कृतपुण्यपुंजाः ११

द्रवच्छंतः ९ प्रतिच्छायाः प्रतिबिंबानि १० तानतिविस्मितः श्लोकद्वयेनाभिनंदति इत्थमिति सतां विदुषां ब्रह्म च तत्सुखं च अनुभूतिश्च तया स्वप्रकाशपरमसुखेनेत्यर्थः भक्तानां परदैवतेन आत्मप्रदेन नाथेन मायाश्रितानां तु नरदारकतया प्रतीयमानेन सह विजह्रुः कृतानां पुण्यानां पुंजा राशयो येषां ते ब्रह्मविदां तदनुभवस्य भक्तानां मति

बहुभिर्जन्मभिः कृच्छ्रेण धृत आत्मा मनो यैस्तैरपि १२ सुखक्रीडनवीक्षणेनाक्षमायस्य सः कथंभूतः यस्य अंतरं तं तरं छिद्रं पीता
मृतैरपि ततो मृत्युभीतैरमरैरपि प्रतीक्ष्यते कथं मरिष्यति कदा वेति यद्वा कथंभूतं सुखक्रीडनं यत् अंतर्हृदये अमरैः प्रतीक्ष्यते
विचिंत्यते पीतामृतैरपि पुनर्निजजीवितेप्सुभिः अयं भावः नामृतपानमात्रेण जीवनं सफलं भवति किंतु भगवल्लीलाऽनुस्म
रणेनेति तेनैव नित्यमंतः चिंत्यत इति १३ कृष्णप्रमुखानर्भकान्दृष्ट्वा स इति व्यवस्य निश्चित्याजगरं वपुर्धृत्वा तेषां ग्रसनाश

यत्पादपांसुर्बहुजन्मकृच्छ्रतो धृतात्मभिर्योगिभिरप्यलभ्यः स एव यद्दृग्विषयः स्वयं
स्थितः किं वर्ण्यते दिष्टमहो व्रजौकसां १२ अथाघनामाऽभ्यपतन्महाऽसुरस्तेषां सुखक्री
डनवीक्षणाक्षमः नित्यं यदंतर्निजजीवितेप्सुभिः पीतामृतैरप्यमरैः प्रतीक्ष्यते १३ दृष्ट्वाऽर्भ
कान्कृष्णमुखानघासुरः कंसानुशिष्टः स बकीबकानुजः अयं तु मे सोदरनाशकृत्तयोर्द्व
योर्ममैनं सबलं हनिष्ये १४ एते यदा मत्सुहृदोस्तिलापः कृतास्तदा नष्टसमा व्रजौकसः प्रा
णे गते वर्ष्मसु का नु चिंता प्रजाऽसवः प्राणभृतो हि ये ते १५ इति व्यवस्याजगरं बृहद्वपुः स योजना

यापथिव्यरोतेति —— द्वितीयश्लोकेनान्वयः कंसेनानुशिष्टः प्रहितः बकीपूत ७ यामहाद्रिपीवरं ॥
ना कथं व्यवस्यतदाह अयं त्विति सार्द्धेन मम तयोर्द्वयोः सोदरयोः स्थाने एनं कृष्णं सबलं ससैन्यं वत्सतत्पालसहितं ह
निष्यामि १४ ननु तथापि व्रजस्थास्तु अवशिष्येरन्नेत्याह एत इति तिलापः कृताः तिलोदकतया कल्पिताः वर्ष्मसु देहे
षु प्रजा एवासवो येषां ते तथा १५ स योजनायामं योजनप्रमाणेन दैर्घ्येण युक्तं च तन्महाद्रिवत्पीवरं च ॥ ७ ॥ ७ ॥ ७ ॥

व्यात्तंप्रसारितंगुहातुल्यमाननंयस्मिनतत् १६ अद्भुतमितियदुक्तंतद्दर्शयितुंविशिनष्टि धरायामधरोष्ठोयस्यसः जलदेषू
त्तरोष्ठोयस्यसः दर्य्याविवाननस्यांतौसृक्किणीयस्यसः गिरेः शृंगाणीवदंष्ट्रायस्यसः ध्वांतवदंतरास्यंयस्यसः वितताध्वा॥॥
वज्जिह्वायस्यसः परुषानिलवत्श्वासोयस्यसः दववदीक्षणयोरुष्मः दाववद्दृष्टिरित्यर्थः परुषानिलश्वासश्चासौदवेक्ष
णोष्मश्चतथा १७ वस्तुतोऽजगरमेवव्यात्ततुंडंदृष्ट्वावृंदावनस्यश्रीः संपदृएषेतिभ्रांत्यामत्वाविपरीतंव्यात्ताजगरतुंडसादृ

धृत्वाऽद्भुतंव्यात्तगुहाननंतदापथिव्यशेतग्रसनाशयाखलः १६ धराऽधरोष्ठोजलदो
त्तरोष्ठोदर्य्याननांतोगिरिशृंगदंष्ट्रः ध्वांतांतरास्योवितताध्वजिह्वःपरुषानिलश्वासद
वेक्षणोष्मः १७ दृष्ट्वातंतादृशंसर्वेमत्वावृंदावनश्रियं व्यात्ताजगरतुंडेनह्युत्प्रेक्षंतेस्म
लीलया १८ अहोमित्राणिगदतसत्त्वकूटंपुरःस्थितं अस्मत्संग्रसनव्यात्तव्यालतुंडाय
तेनवा १९ सत्यमर्ककरारक्तमुत्तराहनुवद्घनं अधराहनुवद्रोधस्तत्प्रतिच्छाययाऽरुणं २०
प्रतिस्पर्द्धेतेसृक्किभ्यांसव्यासव्येनगोदरे तुंगशृंगालयोऽप्येतास्तद्दंष्ट्राभिश्चपश्यत २१॥

श्येनोत्प्रेक्षंतवंतः १८ उत्प्रेक्षामेवप्रश्नोत्तराभ्यामाहुः अहोइतिसत्वकूटंसत्वाभासमिदंनवा तत्रापिअस्मत्संग्रसनाय
व्यात्तंविदारितंयद्व्यालतुंडंतद्वदाचरतिवानवा १९ निश्चिंततथैवेत्याह सत्यमिति अर्ककरैरारक्तंघनमुत्तरोष्ठवत्पश्यतत
स्यघनस्यप्रतिच्छाययाअरुणंरोधस्थलंअधरोष्ठवत् पश्यतेतिसर्वत्रान्वेति २० सृक्किभ्यामोष्ठप्रांताभ्यांप्रतिस्पर्द्धेतेतुल्यत
॥ यावर्तेतेनगोदरेगिरिदर्य्यौएतास्तुंगशृंगालयः तस्यदंष्ट्राभिःस्पर्द्धमानाः २१॥

अस्तृतायाममार्गः विस्तृतोदैर्घ्यवान्मार्गः प्रतिगर्ज्जतिप्रतिस्पर्द्धते एषांशृंगाणामंतर्गतंमध्यगतमंधकारंएतत् अंतराननं
आननस्यमध्यंप्रतिगर्ज्जति २२ दावेनउष्मः खरोवातोऽयंतेनदावाग्निनादग्धानांसत्वानांयोदुर्गंधः सएवसर्पस्यांतर्गतामि
षगंधवद्भाति २३ एवंसत्यमेवाजगरमन्यथोत्प्रेक्ष्यनिर्भयाययुः किंग्रसितायसिष्यति अनेनश्रीकृष्णेनहंत्रेतिबकारेरुश
त्कमनीयंमुखं २४ अमृषावस्तुतः सर्पवपुरसुरएवमृषायतेस्वानांसर्पसादृश्यगोचरत्वेनप्रतीयतइतितान्निरोद्धुंवारयि

अस्तृतायाममार्गोऽयंरसनांप्रतिगर्ज्जति एषामंतर्गतंध्वांतमेतदप्यंतराननं २२ दावोष्म
खरवातोऽयंश्वासवद्भातिपश्यत तद्दग्धसत्वदुर्गंधोप्यंतरामिषगंधवत् २३ अस्मान्किम
त्रग्रसितानिविष्टानयंतथाचेद्बकवद्विनंक्ष्यति क्षणादनेनेतिबकार्युशन्मुखंवीक्ष्योद्धसंतः
करताडनैर्ययुः २४ इत्थंमिथोऽतथ्यमतज्ज्ञभाषितंश्रुत्वाविचिंत्येत्यमृषामृषायते र
क्षोविदित्वाऽखिलभूतहृत्स्थितःस्वानांनिरोद्धुंभगवान्मनोदधे २५ तावत्प्रविष्टास्त्वऽ
सुरोदरां———तरंपरंनगीर्णाः शिशवःसवत्साः प्रतीक्षमाणेनबकारिवेशनंहतस्वकांत
तुयावन्मनोदधेतावत्प्रविष्टाइत्युत्तरेणान्वयः २५ तावत्प्रविष्टाएवकेऽऽ स्मरणेनरक्षसा ॥ २६ ॥
वलंनतुतेनगीर्णाः गिलिताः जीर्णाइतिपाठेपिसएवार्थः कथंभूतेन हतयोः स्वकयोरंतंस्मरतिअनुध्यायतीति
॥नयातेनअतएवबकारेःश्रीकृष्णस्यप्रवेशंप्रतीक्षमाणेन॥ २६ ॥

२४
भा० द०
पू०
८१

तस्मात्स्वभावतो निष्पन्नस्य कर्म्मण एव सर्वकारणत्वात् कर्म्मैव पूज्यमित्याह देहानिति सार्द्धेन १७ संपूजयेत् संमानयेत् ननु देवतोद्देशेन द्रव्यत्यागाद्यात्मकत्वात् कर्म्मणः कथं देवतां विना सिद्धिरित्याशंक्य कर्मांगमात्रं देवतेति पक्षमुपसंहरन्निवहेतुवादमाश्रित्यान्यामेव शैलगवादिरूपां देवतां समर्थयते अंजसेति १८ हेतुबलेनैव विपक्षे दोषमाह आजीव्येति उपजीवति सेवते १९ स्ववृत्तिवक्तुं दृष्टांतत्वेन वर्णानां वृत्तिभेदमाह वर्त्तेतेति ब्रह्मणा वेदाध्ययनादिना २० वैश्य

देहानुच्चावचान्जंतुः प्राप्योत्सृजति कर्मणा शत्रुर्मित्रमुदासीनः कर्म्मैव गुरुरीश्वरः १७ तस्मात्संपूजयेत्कर्मस्वभावस्थः स्वकर्मकृत् अंजसा येन वर्त्तेत तदेवास्य हि दैवतं १८ आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति न तस्माद्विंदते क्षेमं जारं नार्यसती यथा १९ वर्त्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः वैश्यस्तु वार्त्तया जीवेत् शूद्रस्तु द्विजसेवया २० कृषिवाणिज्यगोरक्षा कुशीदं तुर्य्यमुच्यते वार्त्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् २१ सत्वं रजस्तम इति स्थित्युत्पत्त्यंतहेतवः रजसोत्पद्यते विश्वमन्योन्यं विविधं जगत् २२ रजसा चोदिता मेघा वर्षंत्यंबूनि सर्वतः प्रजास्तैरेव सिद्ध्यंति महेंद्रः किं करिष्यति २३ न नः पुरो जनपदा न ग्रामा न गृहा वयं

वृत्तेश्चातुर्विध्यमाह कृषीति कृषिवाणिज्यसहिता गोरक्षा एवं त्रयं कुशीदं वृद्धिजीवनं तुर्य्यं चतुर्थं २१ ननु गवामपि वृत्तिर्महेंद्राधीनैवेत्याशंक्य निरीश्वरसांख्यमताश्रयेण निराकरोति सत्वमिति श्लोकद्वयेन अन्योन्यं स्त्रीपुरुषयोगेन २२ सर्वत इति समुद्रशिलोषरादिष्वपि वृष्टिदर्शनान्न प्रेक्षावत्पूर्वकत्वं वृष्टेरिति भावः तैरेव मेघैरेव सिद्ध्यंति जीवंतीति २३ तथापि योगक्षेमार्थं देवतापेक्षेति चेत्

८१

॥ ११ ॥ इंद्रायमन्युंजनयन्निति कोपजननद्वारा गर्वपर्वतादिंद्रमवतारयितुं देवतानिराकरणं नत्वयमेवाभिप्राय इत्यर्थः १२ अ..न्यत्व.कर्मवादेन देवान्निराकरोति कर्मणेति १३ ननु जडात्कर्मणः केवलात्कथं फलसिद्धिः स्यादिति चेत् अहो अशी॥
लितमीमांसानां स्वमतिविलसितश्रद्धा कर्मणां फलकारणत्ववचनतोऽवगते किं ततोऽनुपपन्नं नाम केचित्तु नरत्तिसाह
स..त्या.: कर्मतंत्रपरमीश्वरं मन्यंते तन्मतमनूद्य निराकरोति अस्ति चेदिति स्वयं कर्मभिरलिप्तोन्येषां जीवानां कर्म्मणां

यस्मात् विसृजेद्धर्मं पारंपर्यागतं नरः कामाल्लोभाद्भयाद्द्वेषात्स वै नाप्नोति शोभनं ११ श्रीशु
क उवाच वचो निशम्य नंदस्य तथान्येषां व्रजौकसां इंद्राय मन्युं जनयन् पितरं प्राह केशवः
१२ श्रीभगवानुवाच कर्म्मणा जायते जंतुः कर्म्मणैव विलीयते सुखं दुःखं भयं क्षेमं कर्म्मणैवा
भिपद्यते १३ अस्ति चेदीश्वरः कश्चित्फलरूप्यन्यकर्मणां कर्त्तारं भजते सोऽपि नह्यकर्त्तुः
प्रभुर्हि सः १४ किमिंद्रेणेह भूतानां स्वस्वकर्मानुवर्तिनां अनीशेनान्यथा कर्त्तुं स्वभावविहि
तं नृणां १५ स्वभावतंत्रो हि जनः स्वभावमनुवर्त्तते स्वभावस्थमिदं सर्वं सदेवासुरमानुषं १६ ॥

फलरूपी फल
दाता कर्त्तारं भजते तत्तत्कर्मफलदानेन १४ अतः कर्मण एव फलसिद्धेस्तत्पारतंत्र्येण अजागलस्तनतुल्यत्वान्न देवतया
कृत्यमित्याह किमिंद्रेणेति ननु कर्मणोपि प्रवृत्तिरंतर्याम्यपेक्षैव कथं सर्वथा देवताया अनुपयोग इत्याशंक्याह स्वभावविहितमिति स्वभावेन प्राक्तनसंस्कारेणैव विहितं यत्कर्म तदन्यथा कर्त्तुमनीशेन १५ एतद्विवृणोति स्वभावतंत्र इति प्रवृत्तेः सं

भा०द० पू० ८९

अतएवन विद्यतेस्वःपरइतिदृष्टिर्येषांइतिस्वपरदृष्ट्यभावादेवतत्तद्भेदादमित्रादयोपियेषांनसंतीत्याह अमित्रे
तिनमित्रमुदास्तउदासीनोविद्विट्‌येषांतेषांकृत्स्नंसर्वंकर्मनगोपनीयंकिंचिदस्तीत्यर्थःसत्यपिभेददर्शनेउदासीनः
शत्रुवद्वर्ज्यः आत्मेतुस्वत्वात्सुहृन्मंत्रेपुनवर्ज्जनीयइत्याहउदासीनइति ५ किंचसुहृद्भिःसहविचार्यज्ञात्वैवकर्म
कर्तव्यंनतुगतानुगतिकमात्रेणेत्याह ज्ञात्वेति अज्ञात्वाचतत्रविदुषोयथावत्कर्मफलंस्यात्तथाअविदुषोन ६ भ

अस्त्यस्वपरदृष्टीनाममित्रोदास्तविद्विषां उदासीनोऽरिवद्वर्ज्य आत्मवत्सुहृदुच्यते ५
ज्ञात्वाऽज्ञात्वाचकर्माणिजनोऽयमनुतिष्ठति विदुषःकर्मसिद्धिःस्यात्तथानाऽविदुषोभ
वेत् ६ तत्रेतावतांक्रियायोगोभवतांकिंविचारितः अथवालौकिकस्तन्मेएच्छतःसाधुभण्य
तां ७ [illegible]पाच पर्ज्जन्योभगवानिंद्रोमेघास्तस्यात्ममूर्तयः तेभिवर्षंतिभूतानांप्राणनंजीव
नं[illegible] ८ तंनातवयमन्येचवार्मुचांपतिमीश्वरं द्रव्यैस्तद्रेतसासिद्धैर्यजंतेक्रतुभिर्नराः ९
तच्छेषेणोपजीवंतित्रिवर्गफलहेतवे पुंसांपुरुषकाराणांपर्जन्यःफलभावनः १० ॥१॥

[illegible]तामयंक्रियायोगःशास्त्रतःकिंविचारितःप्रवृत्तोलौकिकआचारप्राप्तोवेति साधुसोपपत्तिकंभण्यतांकथ्यतां
[illegible] आचारप्राप्तएवेतिसहेतुकमाहपर्जन्यइति आत्ममूर्त्तयःप्रियमूर्त्तयः ८ ततःकिमतआहतमिति तमिं
द्रंवार्मुचांमेघानांपतिंस्वामिनंईश्वरंनियंतारंतद्रेतसातद्वृष्टिपयसा ९ उपजीवंतिउपजीविकांकल्पयंतिधर्मार्थका
मसिद्धये ननुकृष्यादिभिर्जीवंतीतिकिमिंद्रेणतत्राह पुंसामितिफलभावनःफलसाधकःपर्जन्यंविनाकृष्यादिवैफल्यादि

५० ५१ नचाचलनततयोर्दर्शनायनजग्मुः॥ ॥ ५२ इतिश्रीभागवतेटीकायांत्रयोविंशोध्यायः २३ चतुर्विंशे
महेंद्रस्यमखंव्यावर्त्यहेतुभिः कृष्णः प्रवर्त्तयामासगोवर्द्धनमखोत्सवं १ भूसुराणांक्रियागर्वनिरस्तस्तः सुरेषुच मघव
ताद [illegible]तन्मखंसमवारयत् २ ब्राह्मणाः कंसाद्भीताः स्वाश्रमस्थाएवभगवंतमभजन् भगवानपितत्रैवनिवसन् ३

नमस्तुभ्यंभगवतेकृष्णायाकुंठमेधसे यन्मायामोहितधियोभ्रमामः कर्म्मवर्त्मसु ५०
सवैकिलाद्यः पुरुषः स्वमायामोहितात्मनां अविज्ञातानुभावानांक्षंतुमर्हत्यतिक्रमं ५१
इतिस्वाघमनुस्मृत्यकृष्णेतेकृतहेलनाः दिदृक्षवोप्यच्युतयोः कंसाद्भीतानचाचलन्
५२ इतिश्रीभागवतेमहापुराणेदशमस्कंधेयज्ञपत्न्युद्धरणंनामत्रयोविंशोऽध्यायः २३
श्रीशुकउवाच भगवानपितत्रैवबलदेवेनसंयुतः अपश्यन्निवसन्गोपानिंद्रयागकृ
तोद्यमान् १ तदभिज्ञोपिभगवान्सर्वात्मासर्वदर्शनः प्रश्रयावनतोपृच्छद्वृद्धान्नंदपु
रोगमान् २ कथ्यतांमेपितः कोयंसंभ्रमोवउपागतः किंफलंकस्यचोद्देशः केनवासा
ध्यतेमखः ३ एतद्ब्रूहिमहान्कामोमह्यंशुश्रूषवेपितः नहिगोप्यंहिसाधूनांकृत्यंसर्वात्मना
इंद्रयागकृतोद्यमान्गोपान्अपश्यदितिसंबंधः १ २ वृथासंभ्रमोनभवतिमखोयमिति एवंचेत्किमत्रफलमिह ४
लंकादेवताकेनाधिकारिणाकेनवासाधनेनसाध्यते ३ एतद्ब्रूहिमहान्कामोममश्रवणेवर्तते यद्वा तवमहान्कामोदृश्यते

२३
भा० द०
पू०
८५

तत्सर्वं धिगिति व्यगर्हयन्नित्यर्थः ३९ ४० योगविध्यत् अच्छिनत्तं दुरंतं भावं भक्तिं पश्यतेति ५१ द्विजातिसंस्कारः

धिक्कुलं धिक्क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे ३९ नूनं भगवतो माया योगिनामपि मोहि
नी यद्वयं गुरवो नृणां स्वार्थे मुह्यामहे द्विजाः ४० अहो पश्यत नारीणामपि कृष्णे जगद्गु
रौ दुरंतभावं योऽविध्यत् मृत्युपाशान् गृहाभिधान् ४१ नासां द्विजातिसंस्कारो न निवा
सो गुरावपि न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ४२ अथापि ह्युत्तमश्लोके कृ
ष्णे योगेश्वरेश्वरे भक्तिर्दृढा न चास्माकं संस्कारादिमतामपि ४३ ननु स्वार्थविमूढानां
प्रमत्तानां गृहेहया अहो नः स्मारयामास गोपवाक्यैः सतां गतिः ४४ अन्यथा पूर्णका
मस्य कैवल्याद्याशिषां पतेः ईशितव्यैः किमस्माभिरीशस्यैतद्विडंबनं ४५ हित्वाऽन्यान्
भजते यं श्रीः पादस्पर्शाशयाऽसकृत् आत्मदोषापवर्गेण तद्याच्ञा जनमोहिनी ४६ दे
शः कालः पृथग्द्रव्यं मंत्रतंत्रर्त्विजोऽग्नयः देवता यजमानश्च क्रतुर्धर्मश्च यन्मयः ४७
स एष भगवान् साक्षात् विष्णुर्योगेश्वरेश्वरः जातो यदुष्वित्यशृण्म ह्यपि मूढा न विद्महे
४८ अहो वयं धन्यतमा येषां नस्तादृशीः स्त्रियः भक्त्या यासां मतिर्जाता अस्माकं निश्चला हरौ
उपनयनं क्रियाः संध्योपासनादयः ४२ ४३ ४४ ४५ आत्मदोषापवर्गेण चांचल्यगर्वादित्यागेन ४६।४७ इत्यशृ
ण्म एवं ॥४८॥

॥४९॥ नमस्ते भगवते कृष्णायाकुण्ठमेधसे यन्मायामोहितधियो भ्रमामः कर्मवर्त्मसु ४९

अदोषदृष्टयः ३३ देहमिमि तदीयंदेहंतत्रविहायचैतन्येनभगवंतंप्राप्तेत्यर्थः ३४ ३५ अनुशीलयन् अनुकुर्वन् गोगोप
गोपीनामितिकर्म्मणिषष्ठी रूपवाक्कृतैः रूपेणवाचाकृतैश्चरित्रैश्चरमयन् तान् रमयितुंरेमइत्यर्थः ३६ अनुस्मृतिप्रका
रः अहन्मनरानुकरणवतोविश्वेश्वरयोर्यात्रांयत् अहन्महतवंतः ततकृतागसोवयमित्यनुस्मृत्येत्यर्थः ३७ तदाचस्वभार्य्याः

नतथासन्निकर्षेणप्रतियाततततोगृहान् ३३ श्रीशुकउवाच इत्युक्तायज्ञपत्न्यस्तायज्ञवा
टंपुनर्गताः तेचानसूयवः स्वाभिः स्त्रीभिःसत्रमपारयन् ३४ तत्रैकाविधृताभर्त्राभगवं
तंयथाश्रुतं हृदोपगुह्यविजहौदेहंकर्म्मानुबंधनं ३४ भगवानपिगोविंदस्तेनैवान्नेन
गोपकान् चतुर्विधेनाशयित्वास्वयंचबुभुजेप्रभुः ३५ एवंलीलानरवपुर्नृलोकमनुशील
यन् रेमेगोगोपगोपीनांरमयन्रूपवाक्कृतैः ३६ अथानुस्मृत्यविप्रास्तेअन्वतप्यन्कृ
तागसः यद्विश्वेश्वरयोर्यात्रामहन्मनृविडंवयोः ३७ दृष्ट्वास्त्रीणांभगवतिकृष्णेभक्तिम
लौकिकीं आत्मानंचतयाहीनमनुतप्तान्व्यगर्हयन् ३८ धिग्जन्मनस्त्रिवृद्विद्यांधिग्व्रतंधि

गुरूनिवमानयंतोभगवद्भक्तिसहितमात्मानंव्यनंदन्नित्याहुः दृष्ट्वेति अलौकिकींलोका ३७ त्वबहुज्ञतां ॥
तीतां ३८ त्रिवृत्सौत्रंसावित्रंदैक्ष्यमितित्रिगुणितंजन्मव्रतंब्रह्मचर्यंक्रियाः कर्म्माणिदाक्ष्यंचक्रियादाक्ष्यमित्येकं
वापदं धिगित्यधिक्षेपेयेवयंत्वधोक्षजेविमुखास्तेषांजन्मादि॥ ७ ॥ ७ ॥ ७ ॥

वेदद्रुमशाखारूढाः रुचिरप्रवालस्थानीयानिकर्माण्येवोपाददानाः सुखिनः संतः श्रीकृष्णगीतमेवशृण्वंति अ
तस्तस्यैवैतेभवितुमर्हंतीतिभावः येभगवद्गीतंभागवतंशृण्वंतितेवासुदेवरूपाभवंतीत्यर्थः १४ आस्तांचेतनानांक
थानद्योऽपिआवर्तैः परिभ्रमैर्लक्षितेनसूचितेनमनोभवेनकामेनभग्नोवेगोयासांताः आलिंगनेनस्थगितमाच्छा
दितंयथाभवतितथा ऊर्म्मयएवभुजास्तैः कमलोपहाराः कमलान्युपहरंत्यः मुरारेः पादयुगलंगृह्णंतिधारयंति १५।
लोकार्तिहरणशीलत्वादिसाम्यात्सखुः श्रीकृष्णस्यअंबुदस्तदुपरिउदितः पुनः प्रेम्णाप्रवृद्धः सन्कुसुमावलीभिः पु

आरुह्ययेद्रुमभुजान्रुचिरप्रवालान्शृण्वंतिमीलितदृशोविगतान्यवाचः १४ नद्य
स्तदातदुपधार्यमुकुंदगीतमावर्तलक्षितमनोभवभग्नवेगाः आलिंगनस्थगितमू
र्म्मिभुजैर्मुरारेर्गृह्णंतिपादयुगलंकमलोपहाराः १५ दृष्ट्वातपेव्रजपशून्सहरामगोपैः
संचारयंतमनुवेणुमुदीरयंतं ॥प्रेमप्रवृद्धउदितः कुसुमावलीभिः सख्युर्व्यधात्स्ववपुषां
बुदआतपत्रं १६ पूर्णाः पुलिंद्यउरुगायपदाब्जरागश्रीकुंकुमेनदयितास्तनमंडितेन ॥

ष्पसमूहैस्तनुस्यैस्तुषारैर्वीसहस्ववपुषाछत्रंविहितवान् १६ साहंकारमाहुः पूर्णाः कृतार्थाः पुलिंद्यः शवरांगनाः
तारुण्यात्आह। प्रथमंदयितानांस्तनेषुमंडितेनअनुलिप्तेनपुनश्चरतिसमयेउरुगायस्यश्रीकृष्णस्यपदाब्जयोः
संगात्आरुण्येनश्रीः कांतिर्यस्यतेनकुंकुमेनपुनस्तस्यवनस्थलीषुचंक्रमणेनतृणेषुरूषितेनलग्नेनतद्दर्शनेनतथा।

२१
भा० द०
पू०
७९

भूतस्य कुंकुमस्य दर्शनेन स्मररुजा तारुण्यतापो यासां तास्तेन कुंकुमेन आननेषु कुचेषु च कामतप्ते पुलिंपंत्यः तदाधिं कामव्यथां जहुः अतस्ताः कृतार्थाः धिगन्यामीदृश्यः याएवंभूतमपि मन्मथाधिशमनं न लभंत इति भावः १७ हंतेति हर्षे हे सख्यः अयमद्रिर्गोवर्द्धनो ध्रुवं हरिदासेषु श्रेष्ठः कुत इत्यत आहुः यस्मात् रामकृष्णयोश्चरणस्पर्शेन प्रमोदो यस्य सः तृणाद्युद्गमच्छलेन रोमहर्षदर्शनात् किंच यत् यस्मात् मानं तनोति सहगोभिर्गणेन सखिसमूहेन च वर्त्तमानयोस्तयोः कैः पानीयैः सूयवसैः शो

तद्दर्शनस्मररुजस्तृणरूषितेन लिंपंत्य आननकुचेषु जहुस्तदाधिम् १७ हंताऽयमद्रिरबला हरिदासवर्यो यद्रामकृष्णचरणस्पर्शप्रमोदः मानं तनोति सहगोगणयोस्तयोर्यत्पानीयसूयवसकंदरकंदमूलैः १८ गा गोपकैरनुवनं नयतोरुदारवेणुस्वनैः कलपदैस्तनुभृत्सु सख्यः अस्पंदनं गतिमतां पुलकस्तरूणां निर्योगपाशकृतलक्षणयोर्विचित्रं १९ एवंविधा भगवतो या वृंदावनचारिणः वर्णयंत्यो मिथो गोप्यः क्रीडास्तन्मयतां ययुः २० इति श्रीभागवते महापुराणे दशमस्कंधे एकविंशतितमोऽध्यायः २१ ॥ श्रीशुक उवाच ॥

भनतृणैः कंदरैश्च कंदमूलैश्च यथोचितं अतोऽयमतिधन्य इत्यर्थः १८ हे सख्यः इदं त्वतिविचित्रं गोपैः सह गाः वने वने संचारयतोस्तयो रामकृष्णयोर्मधुरपदैर्महावेणुनादैः शरीरिषु ये गतिमंतस्तेषामस्पंदनं स्थावरधर्मस्तरूणां पुलकः जंगमधर्म इति निर्युज्यंते गावः आभिरिति निर्योगाः पादबंधनरज्जवः अधृष्यगवां कर्षणार्थाः पाशाश्च तैः कृतं लक्षणं चिन्हं ययोः शिरसि निर्योगवेष्टनेन स्कंधस्थपाशेन च गोपपरिवृढश्रिया विराजमानयोरित्यर्थः १९ गोपीनां कामतः कृष्णे निःसीमप्रेमसंगमः

द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया वरं दत्वागतः कृष्णो यज्ञशालामितीर्यते १ प्रथमे मासि मार्गशीर्षे १ २ ३ महा
मायेत्यादिसंबोधनैस्तवनं किंचिदशक्यमिति सूचयंत्यः प्रत्येकं प्रार्थयंते ४ ५ कृष्णचेतस्त्वमेवाह भूयान्नंदसुतः पतिरि।

हेमंते प्रथमे मासि नंदव्रजकुमारिकाः चेरुर्हविष्यं भुंजानाः कात्यायन्यर्चनव्रतं १ आप्लु
त्यांभसि कालिंद्या जलांते चोदितेऽरुणे कृत्वा प्रतिकृतिं देवीमानर्चुर्नृप सैकतीं २ गंधै
र्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः उच्चावचैश्चोपहारैः प्रवालफलतंडुलैः ३ कात्याय
नि महामाये महायोगिन्यधीश्वरि नंदगोपसुतं देवि पतिं मे कुरु ते नमः ४ इति मंत्रं जपंत्य
स्ताः पूजां चक्रुः कुमारिकाः एवं मासं व्रतं चेरुः कुमार्यः कृष्णचेतसः ५ भद्रकालीं समान
र्चुर्भूयान्नंदसुतः पतिः उषस्युत्थाय गोत्रैः स्वैरन्योन्याबद्धबाहवः ६ कृष्णमुच्चैर्जगुर्यांत्यः
कालिंद्यां स्नातुमन्वहं नद्यां कदाचिदागत्य तीरे निक्षिप्य पूर्ववत् ७ वासांसि कृष्णं गायंत्यो वि
जह्रुः सलिले मुदा भगवांस्तदभिप्रेत्य कृष्णो योगेश्वरेश्वरः ८ वयस्यैरागतस्तत्र वृतस्तत्क
र्मसिद्धये तासां वासांस्युपादाय नीपमारुह्य सत्वरः ॥ ९ ॥

त्यानर्चुरिति व्रतस्य पूर्वांगमाह उषसीति।
गोत्रैर्नामभिः अन्योऽन्याबद्धबाहवः परस्परं गृहीतपाणयः ६ ७ योगेश्वराणामीश्वर इति प्रत्येकं तादृक्मनोरथपूरण
सामर्थ्यं दर्शयति ८ तासां कर्मणः सिद्धये फलदानायेति नीपं कदंबं बालैः सह ९॥

हेअबलाः १० नोनर्मन परिहासः यस्मात्यूयंव्रतश्रांताः ११ एकैकशोवाआगत्यस्वीकुरुतसहैववा नतत्रास्माकमाग्रह
इत्यर्थः क्ष्वेलितंउतपरिहासः प्रेमपरिप्लुताः प्रेमरसनिमग्नाः १२ १३ तत्रमुग्धाऊचुः अंगभोः श्रीकृष्ण अनयमन्यायंमा

हसद्भिः प्रहसन्बालैः परिहासमुवाचह अत्रागत्याबलाः कामंस्वंस्वंवासः प्रगृह्यतां १०
सत्यंब्रवाणिनोनर्मयद्यूयंव्रतकर्शिताः नमयोदितपूर्वंवाअनृतंतदिमेविदुः ११ एकैक
शः प्रतीच्छध्वंसहैवोतसुमध्यमाः तस्यतत्क्ष्वेलितंदृष्ट्वागोप्यः प्रेमपरिप्लुताः १२ व्रीडि
ताः प्रेक्ष्यचान्योन्यंजातहासाननिर्ययुः एवंब्रुवतिगोविंदेनर्मणाक्षिप्तचेतसः आकंठम
ग्नाः शीतोदेवेपमानास्तमब्रुवन् १३ माऽनयंभोः कृथास्त्वांतुनंदगोपसुतंप्रियं जानीमोऽ
गव्रजश्लाघ्यंदेहिवासांसिवेपिताः १४ श्यामसुंदरतेदास्यः करवामतवोदितं देहिवासांसि
धर्मज्ञनोचेद्राज्ञेब्रुवामहे १५ श्रीभगवानुवाच भवत्योयदिमेदास्योमयोक्तंवाकरिष्यथ
अत्रागत्यस्ववासांसिप्रतीच्छंतुशुचिस्मिताः १६ ततोजलाशयात्सर्वादारिकाः शीतवेपि
ताः पाणिभ्यांयोनिमाच्छाद्यप्रोत्तेरुः शीतकर्शिताः १७ ॥भगवानाहतावीक्ष्यशुद्धभाव

कृष्णाः १४ प्रौढाऊचुः नोचेद्राज्ञेनंदायकंसायवाब्रुवामहेहेकृष्णेतिवा १५ १६ प्रोत्तेरुर्निर्गताः १७ ॥ प्रसादिनः॥
आहताः ॥ ॥

ईषदक्षतयोनीर्वीक्ष्य १८ धृतव्रताः सत्योविवस्त्राः अपोव्यगाहत अप्सुस्नाताइतियत् तदेतत्तु उएवदेवहेलनं अपराध एवेत्यर्थः व्रतवैगुण्यभीतानांप्रायश्चित्तमिवाह अस्यांऽहसः अपनुत्तयेपापस्यनिवृत्तये मूर्ध्न्यंजलिंबध्वाऽधोनमः प्रणामंकृत्वेति १९ इतिदोषत्वेनअच्युतेनाभिहितंविवस्त्राप्लवनंव्रतस्यच्युतिहेतुंमत्वातस्यव्रतस्यपूर्तिकामाः त दशेषकर्मणांतस्यव्रतस्यअन्येषामशेषकर्मणांचसाक्षात्कृतंफलभूतंतमेवनेमुः यतः सएवावद्यमृक्पापमार्ज्ज

स्कंधेनिधायवासांसिप्रीतः प्रोवाचसस्मितं १८ यूयंविवस्त्रायदपोधृतव्रताव्यगाहतैतत्तदुदेवहेलनं बध्वांऽजलिंमूर्ध्न्यपनुत्तयेंऽहसः कृत्वानमोऽधोवसनंप्रगृह्यतां १९ इत्यच्युतेनाभिहितंव्रजाबलामत्वाविवस्त्राप्लवनंव्रतच्युतिं तत्पूर्तिकामास्तदशेषकर्मणांसाक्षात्कृतंनेमुरवद्यमृग्यतः २० तास्तथाऽवनतादृष्ट्वाभगवान्देवकीसुतः वासांसिताभ्यः प्रायच्छत्करुणस्तेनतोषितः २१ दृढंप्रलब्धास्त्रपयाचहापिताः प्रस्तोभिताः क्रीडनवच्चकारिताः वस्त्राणिचैवापहृतान्यथाऽप्यमुंतानाभ्यसूयन्प्रियसंगनिर्वृताः २२ परिधायस्ववासांसिप्रेष्ठसंगमसज्जिताः

टी॰ कः २० २१ दृढमत्यर्थंप्रलब्धावंचिताः यूयंविवस्त्राइत्यादिनात्रपयालज्जयाचहापितास्त्याजिताः अत्रागत्यस्ववासांसीत्याग्रहेणप्रस्तोभिताः उपहसिताः सत्यंब्रवाणिनोनर्मेत्यादिनाक्रीडनवत्कारिताश्चबध्वांऽजलिमित्यादिनाप्रायश्चित्तच्छलेनताः नाभ्यसूयन् दोषदृष्ट्यानापश्यन् २२ प्रेष्ठसंगमेनसज्जिताः वशीकृताः अतोगृहीतचिता· सत्योनोचेलुः गृहीतचित्तत्वमाह॥

२१
भा०द०
पू०
८१

तस्मिन् हसेलज्जायितेक्षणाः लज्जाविलसितमीक्षणंयासांताइत्यर्थः २३ दामोदरइति भक्तवात्सल्यंदर्शयतिश्र
बलाःप्रति २४ भोसाध्व्यः भवतीनांमदर्चनमेवसंकल्पोमनोरथः सचलज्जयायुष्माभिरकथितोपिमयाविदितःस
मयाऽनुमोदितः अतःसत्योभवितुमर्हतिअर्हतीतिचसंभावनोत्यात्मनिकोनभविष्यतीतिसूचितं २५ ततकुतइ

गृहीतचित्तानोचेलुस्तस्मिंल्लज्जायितेक्षणाः २३ तासांविज्ञायभगवान्स्वपादस्पर्श
काम्यया धृतव्रतानांसंकल्पमाहदामोदरोऽबलाः २४ संकल्पोविदितःसाध्व्योभव
तीनांमदर्चनं मयाऽनुमोदितःसोऽसौसत्योभवितुमर्हति २५ नमय्यावेशितधियांका
मःकामायकल्पते भर्जिताक्वथिताधानाप्रायोबीजायनेष्यते २६ यातावलाव्रजंसि
द्धामयेमारंस्यथक्षपाः यदुद्दिश्यव्रतमिदंचेरुरार्य्यार्चनंसतीः २७ श्रीशुकउवाच इ
त्यादिष्टाभगवतालब्धकामाःकुमारिकाः ध्यायंत्यस्तत्पदांभोजंकृच्छ्रान्निर्विविशुर्व्रजं
२८ अथगोपैःपरिवृतोभगवान्देवकीसुतः वृंदावनाद्गतोदूरंचारयन्गाःसहाग्रजः २९

ततआह नमयीतिकामांयपुनःकामभोगायविषयमहिम्नाकामस्यापिशांतिहेतुत्वादितिभावः कामाप्ररोहेदृष्टां
तः भर्जितादग्धाक्वथितापक्वाधानायवादिबीजायअंकुरोद्गमायनप्रायइतिस्वेच्छयापुनःप्ररोहमपिसूचयतिधुवा
दीनांतथादर्शनात् २६ सिद्धाःपूर्णमनोरथाःतदाहइमाआगामिनीरात्रीःमयारंस्यथेतिआर्याकात्यायनीसतीःसतीं

भा०द० ८१

३० ३१ भक्तयाऽनुकंप्यकन्यास्तास्तद्विवर्जितयज्वनां पत्न्यनुग्रहतस्तेषामहन् कर्ममहामदं १ विप्रभार्याऽनुग्रहा
यप्रवाटंगच्छन्विप्राणांकाठिन्यमभिप्रेत्यतेभ्योपिद्रुमाः श्रेष्ठाइतितानभिनंदतिचतुर्भिः पश्यतेतिहेस्तोकक
सादयोगोपाः एतान् द्रुमान्पश्यतपरार्थमेवएकांतेनजीवनंयेषांतानतदाहवातवर्षादीन् स्वयंसहंतः सहमाना

निदाघार्कातपेतिग्मेच्छायाभिः स्वाभिरात्मनः आतपत्रायितान्वीक्ष्यद्रुमानाहव्रजौ
कसः ३० हेस्तोककृष्णहेअंशोश्रीदामनसुबलार्जुन विशालर्षभतेजस्विन्देवप्रस्थ
वरूथप ३१ पश्यतैतान्महाभागान्परार्थैकांतजीविनः वातवर्षातपहिमान्सहंतो
वारयंतिनः ३२ अहोएषांवरंजन्मसर्वप्राण्युपजीवनं सुजनस्येवयेषांवैविमुखायां
तिनार्थिनः ३३ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः गंधनिर्यासभस्मास्थितो
क्मैः कामान्वितन्वते ३४ एतावज्जन्मसाफल्यंदेहिनामिहदेहिषु प्राणैरर्थैर्धियावा
चाश्रेयएवाचरेत्सदा ३५ इतिप्रवालस्तवकफलपुष्पदलोत्करैः तरूणांनम्रशाखा
नांमध्येनयमुनांगतः ३६ तत्रगाःपाययित्वाऽपः सुमृष्टाः शीतलाः शिवाः ततोनृप

अस्माकंवारयंति ३२ सुजनस्यकृपालोरर्थिनइव ३३ निर्यासोऽ स्वयंगोपाः कामंस्वादुपपुर्जलं ३७
घनरसः तोक्माः पल्लवाद्यंकुराः ३४ ३५ इत्यभिनंदन्प्रवालादिसमूहैर्नतशाखानांतरूणांमध्येनयमुनांप्राप्तः

भा॰द॰ पु॰ ८२

कुमारिकाभ्यः पूर्वमेव तन्नर्मा कुलतया अगृहीतभोज्यानामेव निर्गमात् क्षुधार्त्ता इत्युक्तं ३८ इति श्रीभागवते महापुराणे दशमस्कंधे द्वाविंशोध्यायः २२ त्रयोविंशे ततो गोपैरन्नयाच्ञाऽपदेशतः तत्पत्न्यनुग्रहात् कृष्णो दीक्षितानन्वतापयत् १ १ भक्त्यायाइत्येकवचनं सद्यः सायुज्याभिप्रायेण २ ३ अस्मद्विसर्ज्जिताः आवाभ्यां प्रहिताः संतो याच

तस्योपवने कामं चारयंतः पशून्नृप कृष्णरामावुपागम्य क्षुधार्त्ता इदमब्रुवन् ३८ इति श्रीभागवते महापुराणे दशमस्कंधे द्वाविंशोध्यायः २२ ॥ गोपा ऊचुः राम राम महावीर्य कृष्ण दुष्टनिबर्हण एषा वै बाधते क्षुन्नस्तच्छांतिं कर्त्तुमर्हथः १ श्रीशुक उवाच इति विज्ञापितो गोपैर्भगवान्देवकीसुतः भक्त्याया विप्रभार्य्यायाः प्रसीदन्निदमब्रवीत् २ प्रयात देवयजनं ब्राह्मणा ब्रह्मवादिनः सत्रमांगिरसं नाम ह्यासते स्वर्गकाम्यया ३ तत्र गत्वौदनं गोपा याचतास्मद्विसर्ज्जिताः कीर्त्तयंतो भगवत आर्यस्य मम चाभिधां ४ इत्यादिष्टा भगवता गत्वाऽयाचंत ते तथा कृतांजलिपुटा विप्रान्दंडवत्पतिता भुवि ५ हे भूमिदेवाः शृणुत कृष्णस्यादेशकारिणः प्राप्ताञ्जानीत भद्रं वो गोपान्नो रामचोदितान् ६ गाश्चारयंतावविदूर ओदनं रामाच्युतौ वो लषतो बुभुक्षितौ तयोर्द्विजा ओदनमर्थिनोर्यदि श्र

द्धा च वो यच्छत धर्मवित्तमाः ७ ।

ध्वं युष्माकं का तत्र लज्जा ननु तथाप्यपात्रत्वादस्माकं किमिति दास्यंतीति चेत्तत्राह कीर्त्तयंत इति ४ ५ ६ अविदूरे वर्त्तमानौ संतौ वो युष्मदन्नं लषतः अभिलषतः इच्छतः वः ओदनं श्रद्धा च यदि

दीक्षितावयमभोज्यान्नाइतिवदिष्यंतीतिस्वयमेवाशंक्याहुः दीक्षायाइति दीक्षायाआरभ्याग्नीषोमीयपश्वालंभनात्पूर्वंदोषः नततोऽन्यत्रतथासौत्रामण्याश्चान्यत्रअन्यदा ८ क्षुद्रेस्वर्गादावाशामात्रंयेषांतेभूरीणिक्लेशाधिकानिकर्माणियेषांतेअतोऽज्ञाः वृथाज्ञानवृद्धाइतिमानवंतः ९ ननुकर्मक्रमसुल्लंघ्यादेशकालेऽन्यार्थमन्नमन्यस्मैकथंदेयंतत्राह देशइ

दीक्षायाः पशुसंस्थायाः सौत्रामण्याश्चसत्तमाः अन्यत्रदीक्षितस्यापिनान्नमश्नन्हि दुष्यति ८ इतितेभगवद्याज्ञांशृण्वंतोपिनशुश्रुवुः क्षुद्राशाभूरिकर्माणोबालिशावृद्धमानिनः ९ देशःकालःपृथग्द्रव्यंमंत्रतंत्रर्त्विजोऽग्नयः देवतायजमानश्चक्रतुर्धर्मश्चयन्मयः १० तंब्रह्मपरमंसाक्षाद्भगवंतमधोक्षजं मनुष्यदृष्ट्यादुष्प्रज्ञामर्त्यात्मानोनमेनिरे ११ नतेयदोमितिप्रोचुर्नेनेतिचपरंतप गोपानिराशाःप्रत्येत्यतथोचूरामकृष्णयोः १२ तदुपाकर्ण्यभगवान्प्रहस्यजगदीश्वरः व्याजहारपुनर्गोपान्दर्शयन्लौकिकींगतिं १३ मांज्ञापयतपत्नीभ्यःससंकर्षणमागतं दास्यंतिकाममन्नंवःस्निग्धामय्युषिताधिया १४

तिपृथक्चरुपुरोडाशादिद्रव्यंतंत्रप्रयोगःधर्मोऽपूर्वं १० मनुष्योयमितिदृष्ट्यामर्त्यात्मानोदेहाभिमानिनोब्राह्मणावयंमहांतइतिमन्यमानाः ११ १२ लौकिकींगतिमिति नहिकार्यार्थिनोनिर्विद्यंतेकोवायाचकोनपराभूयतइत्यादिलोकस्थितिंदर्शयन् १३ केवलंदेहेनगृहेवसंतिधियाचमय्येवोषिताः यतोमयिस्निग्धाअतोदास्यंतीति १४ ॥ छ ॥ छ ॥

॥ ९८ ॥

भा० द० पू० ८३ ॥ १५ ॥ ईषिताः प्रेषिताः १६ सश्रीकृष्णो गोपालैः सह १७ ततकथाक्षिप्तमनस्त्वात्तद्दर्शनोत्सुकाः अतस्तमुपागतं श्रुत्वा जा
तसंभ्रमा बभूवुरिति १८ भक्ष्यभोज्यलेह्यचोष्यभेदैश्चतुर्विधं बहुगुणं संस्कारविशेषैर्बहवो गुणा रसस्तौरभ्यादयो यस्मिन्
तत् भाजनैः अमत्रैः पत्यादिभिर्वार्यमाणा अपि प्रियं श्रीकृष्णं अभिसस्रुः अभिजग्मुः अप्रतिबंधे दृष्टांतः समुद्रं निम्नगा नद्य

गत्वाऽथ पत्नीशालायां दृष्ट्वासीनाः स्वलंकृताः नत्वा द्विजसतीर्गोपाः प्रश्रिता इदमब्रु
वन् १५ नमो वो विप्रपत्नीभ्यो निबोधत वचांसि नः इतोऽविदूरे चरता कृष्णेनेहेषिता व
यं १६ गाश्चारयन्स गोपालैः सरामो दूरमागतः बुभुक्षितस्य तस्यान्नं सानुगस्य प्रदीय
तां १७ श्रुत्वाऽच्युतमुपायातं नित्यं तद्दर्शनोत्सुकाः तत्कथाक्षिप्तमनसो बभूवुर्जातसंभ्र
माः १८ चतुर्विधं बहुगुणमन्नमादाय भाजनैः अभिसस्रुः प्रियं सर्वाः समुद्रमिव निम्नगाः
१९ निषिध्यमानाः पतिभिर्भ्रातृभिर्बंधुभिः सुतैः भगवत्युत्तमश्लोके दीर्घश्रुतधृताशयाः
२० यमुनोपवने शोकनवपल्लवमंडिते विचरंतं वृतं गोपैः सायजं ददृशुः स्त्रियः २१ श्यामं
हिरण्यपरिधिं वनमाल्यबर्हधातुप्रवालनटवेषमनुव्रतांसे विन्यस्तहस्तमपरेण धुनानमब्जं
कर्णोत्पलालककपोलमुखाब्जहासं २२ ॥ इवेति १९ अत्र हेतुः भगवतीति दीर्घं बहुकालं श्रुतेन श्रवणेन
धृत आशयो याभिस्ताः २० तथागताः सत्यो ददृशुः २१ हिरण्यवत्परिधिः परिधानं यस्य तं पीतांबरमित्यर्थः वनमाल्यैर्बर्हैर्धातु
भिः प्रवालैश्च नटवद्वेषो यस्य तं अनुव्रतस्य सख्युः अंसे विन्यस्तो निहितो हस्तो येन तं इतरेण हस्तेन लीलयाऽब्जं धुनानं भ्रामयंतं क
र्णयोरुत्पले यस्य अलकाः कपोलयोर्यस्य मुखाब्जे हासो यस्य तं वे

८३

वृत्तेरपिलयेनसामरस्यमाह प्रायइति बहुशः आनताये प्रियतमस्य उदयाः उत्कर्षास्तएवकर्णपूराः कर्णौपूरयंति
कृतार्थीकुर्वंतीतितथातैः कर्णाभरणैरितिवा यस्मिन्श्रीकृष्णेनिमग्नमनसः आविष्टचेतसः तंलोचनद्वारैरंतः प्र
वेश्यसुचिरमुपगुह्यतापंजहुः अभिमतयोऽहंकृतयः प्राज्ञंसुषुप्तिसाक्षिणंपरिरभ्यतस्मिन्लयंप्राप्ययथेति २३ अखि
लदृक् द्रष्टासर्ववुद्धिसाक्षीतास्तथाप्राप्ताविज्ञायापितथैत्येतद्विवृणोति त्यक्तसर्वाशाःत्यक्ताःसर्वाआशयाभिस्ताःके

प्रायःश्रुतप्रियतमोदयकर्णपूरैर्यस्मिन्निमग्नमनसस्तमथाक्षिरंध्रैः अंतःप्रवेश्यसु
चिरंपरिरभ्यतापंप्राज्ञंयथाऽभिमतयोविजहुर्नरेंद्र २३ तास्तथात्यक्तसर्वाशाःप्रा
प्ताआत्मदिदृक्षया विज्ञायाखिलदृग्द्रष्टाप्राहप्रहसिताननः २४ स्वागतंवोमहाभागा
आस्यतांकरवामकिं यन्नोदिदृक्षयाप्राप्ताउपपन्नमिदंहिवः २५ नन्वद्धामयिकुर्वंति
कुशलाःस्वार्थदर्शिनाः अहैतुक्यव्यवहितांभक्तिमात्मप्रियेयथा २६ प्राणबुद्धिमनः
स्वात्मदारापत्यधनादयः यत्संपर्कात्प्रियाआसन्ततःकोन्वपरःप्रियः॥ २७ ॥

वलमात्मनःस्वस्यैवदिदृक्षयेति २४ हेमहाभागाःवःस्वागतं शुभमागमनं तदेवाह यत्यस्मात्प्रतिबंध —— तिरस्का
रेणअस्माकंदिदृक्षयाप्राप्ताइतिइदंवःउपपन्नंसंपन्नंयुक्तमितिवा २५ युक्तत्वमाह नन्विति आत्मप्रिये आत्माचप्रियश्चतस्मि
न्नपिकुशलाःविवेकिनोऽतएवस्वस्यात्मनोर्थंपुरुषार्थंपश्यंतियेतेयथायथावद्भक्तिंकुर्वंतिःयथात्वमाहअद्धासाक्षात्अत्रहेतुः
अहैतुकव्यवहितांफलाभिसंधिरहितां अतएवाव्यवहितांनिरंतरां २६ आत्मनःसर्वतःप्रेष्ठत्वमुपपादयतिप्राणेतिःस्वाङ्गा

भा॰द॰
पू॰
८४

तत्तस्मात्कृतार्था यूयं तद्देवयजनं यज्ञवाटं याता गच्छत ननु कृतार्थाः किमिति याम इति चेदत आह पतय इति पार-
यिष्यंति समापयिष्यंति पतीनामनुग्रहायेत्यर्थः २८ नृशंसं परुषं निगमं प्रतिज्ञां न मे भक्तः प्रणश्यतीति वेदं वा न सपुन-
रावर्तत इति पद्भ्यां वसृष्टं अवज्ञयापि दत्तं बहुमानेन न केशैर्निवोढुं दासी भवितुं २९ किं च न गृह्णंति नोऽस्मान् हे अरिंदम काम-

तथा न तद्देवयजनं पतयो वो द्विजातयः स्वसत्रं पारयिष्यंति युष्माभिर्गृहमेधिनः २८
विप्रपत्न्य ऊचुः मैवं वचोर्हति भवान्गदितुं नृशंसं सत्यं कुरुष्व निगमं तव पादमूलं प्रा-
प्ता वयं तुलसिदामपदावसृष्टं केशैर्निवोढुमतिलंघ्य समस्तबंधून् २९ गृह्णंति नो न पत-
यः पितरौ सुता वा न भ्रातृबंधुसुहृदः कुत एव चान्ये तस्माद्भवत्प्रपदयोः पतितात्मनां नो
नान्या भवेद्गतिररिंदम तद्विधेहि ३० श्रीभगवानुवाच पतयो नाभ्यसूयेरन् पितृभ्रा-
तृसुतादयः लोकाश्च वो मयोपेता देवा अप्यनुमन्वते ३१ न प्रीतयेऽनुरागाय ह्यंगसंगो
नृणामिह तन्मनो मयि युंजाना अचिरान्मामवाप्स्यथ ३२ श्रवणाद्दर्शनाद्ध्यानान्म-

लोभपापादिदमन भवतः प्रपदयोः पादाग्रयोर्निपतितदेहानां अन्या स्वर्गादि॰ यि भावोनुकीर्तनात् ॥
गतिरपि न भवेत् मा भूत्तत्तस्माद्दास्यमेव विधेहीति ३० मया उपेता अनुज्ञाताः प्रत्यक्षं देवान्प्रदर्श्याह देवा अपीति ३१ न
यापि त्वां त्यक्तुं न शक्नुम इति चेत्तत्राह नेति प्रीतये सुखाय अनुरागाय स्नेहवृद्धये अंगसंगः अंगाभ्यां संगः ३२ अनसूयवः ८४

स्वकरादवच्युतान्विनिःसृतान्विस्मितःसन्कृत्यंकिमत्रेत्यादिविचिंत्यतत्रोपायंज्ञात्वास्वयमपिअविशदित्यन्वयः
॥२७॥ कथंविचिंत्यअस्यजीवनंअमीषांचविहिंसनमितिद्वयंवैनिश्चितंकथंनस्यादिति २८ घनच्छदामेघांतरिताःकौ
णपाःकुणपाशिनोराक्षसाःकुणपोनिर्ऋतिस्तदीयाइतिवा २९ चूर्णीकर्त्तुमिच्छोस्तस्यगलेआदावेवतरसाववृधेअ

तान्वीक्ष्यकृष्णः सकलाभयप्रदोह्यनन्यनाथान्स्वकरादवच्युतान् दीनांश्चमृत्योर्जठरा
ग्निघासान्घृणार्दितोदिष्टकृतेनविस्मितः २७ कृत्यंकिमत्रास्यखलस्यजीवनंनवा
अमीषांचसतांविहिंसनं द्वयंकथंस्यादितिसंविचिंत्यतज्ज्ञात्वाविशत्तुंडमशेषदृग्घ
रिः २८ तदाघनच्छदादेवाभयाद्धाहेतिचुक्रुशुः जहृषुर्येचकंसाद्याःकौणपास्त्वघबां
धवाः २९ तच्छ्रुत्वाभगवान्कृष्णस्त्वव्ययःसार्भवत्सकं चूर्णीचिकीर्षोरात्मानंतरसाव
वृधेगले ३० ततोऽतिकायस्यनिरुद्धमार्गिणोह्युद्गीर्णदृष्टेर्भ्रमतस्त्वितस्ततः पूर्णोऽन्तरंगेप
वनोनिरुद्धोमूर्द्धन् विनिर्भिद्यविनिर्गतोबहिः ३१ तेनैवसर्वेषुबहिर्गतेषुप्राणेषुवत्सान्
सुहृदःपरेतान् दृष्ट्यास्वयोत्थाप्यतदन्वितःपुनर्वक्त्रान्मुकुंदोभगवान्विनिर्ययौ ३२॥

वर्द्धत ३० निरुद्धोमुखादीनांमार्गभूतः कंठोयस्यास्तितस्यउद्गीर्णदृष्टेर्बहिर्निर्गतलोचनस्यअंतरंगेदेहमध्येपूर्णः
परिभृतः मूर्द्धनमूर्द्धानंब्रह्मरंध्रंनिर्भिद्यबहिर्विनिर्गतइति ३१ प्राणेषुइंद्रियेषुस्वयाअमृतवर्षिण्यादृष्ट्यैव ३२ ॥६

अहिदेहे स्थितं शुद्धसत्वमयं ज्योतिर्निर्गत्य खेऽवस्थितं तस्मिन्नीशे विवेश ३३ स्वकृतः स्वकार्यकृतः श्रीकृष्णस्य अर्हण
मकृतपूजामकुर्वन् सुगाः सुष्ठु गायंतीति सुगा गंधर्वादयः ३४ किं च तेषां यान्यद्भुतस्तोत्रादीनि तेषां नैकोत्सवा अनेकोत्सवा ये
मंगलस्वनास्तान्स्वधाम्नोऽतिसमीपं श्रुत्वाऽजो ब्रह्मा अचिरादागतः ईशस्य कृष्णस्य महिमानं दृष्ट्वा विस्मयं प्रापेति ३५ बहुति

पीनाहिभोगोत्थितमद्भुतं महज्ज्योतिः स्वधाम्ना ज्वलयद्दिशो दश प्रतीक्ष्य खेऽव।
स्थितमीश निर्गमं विवेश तस्मिन्मिषतां दिवौकसां ३३ ततोऽतिहृष्टाः स्वकृतोऽकृता
र्हणं पुष्पैः सुरा अप्सरसश्च नर्तनैः गीतैः सुगा वाद्यधराश्च वाद्यकैः स्तवैश्च विप्रा जय
निःस्वनैर्गणाः ३४ तदद्भुतस्तोत्रसुवाद्यगीतिकाजयादिनैकोत्सवमंगलस्वनान्
श्रुत्वा स्वधाम्नोऽन्त्यज आगतोऽचिराद्दृष्ट्वा महीशस्य जगाम विस्मयं ३५ राजन्नाजगरं
चर्म शुष्कं वृंदावनेऽद्भुतं व्रजौकसां बहुतिथं बभूवाक्रीडगह्वरं ३६ एतत्कौमारजं कर्म
हरेरात्माहिमोक्षणं मृत्योः पौगंडके बाला दृष्ट्वोचुर्विस्मिता व्रजे ३७॥ थं बहुकालं आक्रीडगह्व

रं क्रीडार्थं महाबिलं ३६ अन्यच्चातिचित्रं वृत्तमित्याह एतदिति कौमारं पञ्चमाब्दांतं पौगंडं दशमावधि कैशोरमापंचदशा
द्यौवनं तु ततः परं हरेः कौमारजं पंचमाब्दकृतं कर्म तदेव दृष्ट्वा पौगंडके षष्ठेऽब्दे बाला अद्यैतद्वृत्तमित्यूचुः किं तत् कर्म मृत्योः सका
शादात्मनामहेश्च मोक्षणं आत्मनां प्रसिद्धान्मृत्योः अहेस्तु संसारलक्षणात् अघासुरस्य ज्योतिषः श्रीकृष्णे प्रवेशमपि तदा दृष्टं

नैतद्विचित्रं किं तदित्यपेक्षायामाह अघोऽपीति आत्मसाम्यं स्वसमानरूपतां ३८ यस्याङ्गं मूर्तिस्तस्य प्रतिमा प्रतिकृ
तिस्तत्रापि केवलं मनोमयी साऽपि बलादन्तर्हिता सती भागवतीं गतिं ददौ प्रह्लादादिभ्यः स एव साक्षात्त्वयमन्तर्गतः किंपु

नैतद्विचित्रं मनुजार्भमायिनः परावराणां परमस्य वेधसः अघोऽपि यत्स्पर्शनधौतपा
तकः प्रापात्मसाम्यं त्वसतां सुदुर्लभं ३८ सकृद्यदङ्गप्रतिमान्तराहिता मनोमयी भागव
तीं ददौ गतिं स एव नित्यात्मसुखानुभूत्यभिव्युदस्तमायोऽन्तर्गतो हि किं पुनः ३९ सूत उ
वाच इत्थं द्विजा यादवदेवदत्तः श्रुत्वा स्वरातुश्चरितं विचित्रं पप्रच्छ भूयोऽपि तदेव पुण्यं
वैयासकिं यन्निगृहीतचेताः ४० राजोवाच ब्रह्मन्कालान्तरकृतं तत्कालीनं कथं भ
वेत् यत्कौमारे हरिकृतं जगुः पौगण्डकेऽर्भकाः ४१ तद्ब्रूहि मे महायोगिन्परं कौतूहलं गुरो
नूनमेतद्धरेरेव माया भवति नान्यथा ४२ वयं धन्यतमा लोके गुरोऽपि क्षत्रबन्धवः यत्पिबामो मुहुस्त्वत्तः पुण्यं कृष्णकथामृतं ४३ सूत उवाच इत्थं स्म पृष्टः स तु बादरायणिस्तत्स्मारि

नः नित्या चासावात्मसुखानुभूतिश्च तयाऽभितो व्युदस्ता माया येन सः ३९ येन श्रवणेनानन्तस्य हृताखिलेन्द्रिय
णेन नि गृहीतं वशीकृतं चेतो यस्य सः ४० कालान्तरे कौमारे कृतं पौगण्डके कथं ज्ञात्वोचुरित्यर्थः ४१।४२।४३ तेन यः स्मा
॥रितोऽनन्तः तेन हृतान्यखिलेन्द्रियाणि यस्य सः ॥ ६७ ॥

तथाभूतोपिकथंचिल्लब्धवहिर्दृष्टिः हेभागवतोत्तमोत्तमहेशौनक ४४ इतिदशमेटीकायांद्वादशोध्यायः १२ त्र
योदशेहरद्ब्रह्माबत्सान्बालांश्वमायया तदानन्तस्वेरूपोऽब्दंहरः पूर्ववदाचरत् १ नूतनयसिनव्यवत्करोषि २ तथा
हिसारभृतांसारग्राहिणामयंनिसर्गः स्वभावः कोसौअच्युतस्यवार्त्ताप्रतिक्षणंसाधुनव्यवद्भवतीतियत्तः विटानांस्त्रै

कृच्छ्रात्पुनर्लब्धबहिर्दृशिः शनैः प्रत्याहृतंभागवतोत्तमोत्तम ४४ इतिश्रीभागवते
महापुराणेदशमस्कंधेअघासुरवधोनामद्वादशोध्यायः १२ श्रीशुकउवाच साधु
पृष्टंमहाभागत्वयाभागवतोत्तम यन्नूतनयसीशस्यशृण्वन्नपिकथांमुहुः १ सतामयं
सारभृतांनिसर्गोयदर्थवाणीश्रुतिचेतसामपि प्रतिक्षणंनव्यवदच्युतस्ययत्स्त्रिया
विटानामिवसाधुवार्ता २ शृणुष्वावहितोराजन्नपिगुह्यंवदामिते ब्रूयुःस्निग्धस्यशि
ष्यस्यगुरवोगुह्यमप्युत ३ तथाऽघवदनान्मृत्योरक्षित्वावत्सपालकान् सरित्पु
लिनमानीयभगवानिदमब्रवीत् ४ अहोतिरम्यंपुलिनंवयस्याः स्वकेलिसंपन्मृदुला

णानांस्त्रियाः कामिन्याः वार्तेवकथंभूतानामपिश्रुतं यात्रश्रुतवार्तैवअर्थोयेषांतानिवाणी ऽऽ ऽच्छवालुकं
श्रुतिचेतांसियेषांनथाभूतानामपि २ ३ ४ भोजनविधानायपुलिनंस्तौति अहोइति स्वीयानांकेलीनांसंपद्यो
विद्यंतेयस्मिन्तत मृदुला अच्छावालुकायस्मिनतत किंचस्फुटतविकसत्सरः सरोजवाहुल्येनोपचारतः ॥६॥६॥

सरस्वविकसदित्युक्तंतस्यगंधः तेनहृताः आकृष्टाः अलयः पत्रिणश्चयेतेषांकेउदकेध्वनयस्तेषांप्रतिध्वानास्तै
र्लसंतोद्रुमास्तैराकुलंव्याप्तम् ५ दिवारूढंवेलातीतेत्यर्थः ६ आरुध्यसंरुध्यशाद्वलेहरिततृणप्रदेशे ७ तदातेविरे
जुः कृष्णस्यविष्वक्परितः पुरुराजिमंडलैर्बहुभिः पंक्तिमंडलैः सहहैरंतर्येणोपविष्टाः श्रीकृष्णाभिमुखानिआनना।

स्फुटत्सरोगंधहृतालिपत्रिकध्वनिप्रतिध्वानलसद्द्रुमाकुलं ५ अत्रभोक्तव्यमस्मा
भिर्दिवारूढंक्षुधार्दिताः वत्साः समीपेऽपः पीत्वाचरंतुशनकैस्तृणं ६ तथेतिपाययि
त्वांऽर्भावत्सानारुध्यशाद्वले मुक्त्वाशिक्यानिबुभुजुः समंभगवतामुदा ७ कृष्णस्यवि
ष्वक्पुरुराजिमंडलैरभ्याननाः फुल्लदृशोव्रजार्भकाः सहोपविष्टाविपिनेविरेजुश्छ
दायथांऽभोरुहकर्णिकायाः ८ केचित्पुष्पैर्दलैः केचित्पल्लवैरंकुरैः फलैः त्वग्भिः।
शिग्भिर्दृषद्भिश्चबुभुजुः कृतभाजनाः ९ सर्वेमिथोदर्शयंतः स्वस्वभोज्यरुचिंपृथक् ह
संतोहासयंतश्चाऽभ्यवजह्रुः सहेश्वराः १० विभ्रद्वेणुंजठरपटयोः शृंगवेत्रेचकक्षेवामेपा

नियेषांतेफुल्लदृशः विकशितनयनाः कमलकर्णिकायाः परि णौमसृणकवलंतत्फलान्यंगुलीषु
तः पत्राणियथेति ८ पुष्पैस्तद्दलैरन्यैश्चपत्रैः कृतानिभाजनानियैस्ते ९ रुचिंस्वादविशेषंअभ्यवजह्रुर्बुभुजिरेस
हेश्वराः श्रीकृष्णसहिताः १० यज्ञभुगपितेषुबुभुजेबालानामिवकेलिर्यस्यसतत्तदाहउदरवस्त्रयोर्मध्येवेणुंबिभ्रत्

१३
भा॰द॰
पू॰
४४

स्थदितिसर्वत्रसंबध्यतेवामइतिकक्षपाण्योर्विशेषणं मसृणंस्निग्धंदध्योदनकवलंतदुचितानिविल्वादिफला
निअंगुलीसंधिषुकर्णिकेवसर्वाभिमुखोमध्येतिष्ठन्स्वस्यपरितउपविष्टान्सुहृदःस्वैर्नर्मभिःपरिहासवाक्यैःस्व
र्गेलोकेस्वर्गवासिनिजनेमिषति आश्चर्येणपश्यतिसतिलोकेजनानांमध्येवुभुजे ११ १२ भीभयंभयहेतुभ्योभ

तिष्ठन्मध्येस्वपरिसुहृदोहासयन्नर्मभिःस्वैःस्वर्गेलोकेमिषतिबुभुजेयज्ञभुग्बाल
केलिः ११ भारतैवंवत्सपेषुभुंजानेष्वच्युतात्मसु वत्सास्त्वंतर्वनेदूरंविविशुस्तृणलोभि
ताः १२ तान्दृष्ट्वाभयसंत्रस्तानूचेकृष्णोऽस्यभीभयं मित्राण्याशान्माविरमतेहाने
ष्येवत्सकानहं १३ इत्युक्त्वाद्रिदरीकुंजगह्वरेष्वात्मवत्सकान् विचिन्वन्भगवान्कृ
ष्णः सपाणिकवलोययौ १४ अंभोजन्मजनिस्तदंतरगतोमायार्भकस्येशितुर्द्रष्टुं
मंजुमहित्वमन्यदपितद्वत्सानितोवत्सपान् नीत्वाऽन्यत्रकुरूद्वहांतरदधात्खे
ऽवस्थितोयःपुरादृष्ट्वाऽघासुरमोक्षणंप्रभवतःप्राप्तःपरंविस्मयं॥ १५॥ ६॥

यंअस्यअपास्ययद्वा अस्यविश्वस्यभियोपिभयंयःश्रीकृष्णःआशातभोजनात् अस्मिन्पादेअक्षराधिक्यमार्षं १३ अ
द्रिषुतद्दरीषुकुंजेषुलतादिपिहितादरविवरेषुगह्वरेषुसंकटस्थानेषुच १४ अंभोजन्मनःपद्माज्जनिर्यस्यसःब्रह्मातदं
तरेतस्मिन्नवसरेगतःआगतःतच्छिद्रंप्राप्तोवामंजुमनोहरंअन्यदपिमहित्वंमहिमानंद्रष्टुंतस्यवत्सानितःस्थानात्वत्स

४४

५२

उभावपिवत्सान्वत्सपांश्चविविकायस्त्रन्वीक्षितवान् १६ विधिकृतंब्रह्मणाकृतं १७ उभयायितंवत्सवत्सपालरू पेणवर्तमानमित्यर्थः अयंभावः यदितूष्णीमासेतर्हितन्मातॄणांविषादःस्यात् यदिचतानेवस्त्रानयिष्यामितर्हिब्र ह्मणोमोहोनस्यादितितदुभयप्रीतयेतथाचकेइति १८ तदेवदर्शयतियावदिति वत्सपानांवत्सकानांचाल्पकंव

ततोवत्सानदृष्ट्वैत्यपुलिनेऽपिचवत्सपान् उभावपिवनेकृष्णोविचिकायसमंततः १६ क्वाप्यदृष्ट्वांऽतर्विपिनेवत्सान्पालांश्चविश्ववित् सर्वंविधिकृतंकृष्णःसहसाऽवजगामह १७ ततःकृष्णोमुदंकर्तुंतन्मातॄणांचकस्यच उभयायितमात्मानंचक्रेविश्वकृदीश्वरः १८ यावद्वत्सपवत्सकाऽल्पकवपुर्यावत्करांघ्र्यादिकंयावद्यष्टिविषाणवेणुदलशिग्यावद्विभूषांबरं यावच्छीलगुणाभिधाकृतिवयोयावद्विहारादिकं सर्वंविष्णुमयंगिरोऽङ्गवदजःसर्वस्वरूपोबभौ १९ स्वयमात्मात्मगोवत्सान्प्रतिवार्यात्मवत्सपैः क्रीडन्नात्मविहारैश्चसर्वात्माप्राविशद्व्रजं २० ॥

पुःप्रमाणमनतिक्रम्यएवमुपर्य्यपियोज्यं यद्वायावद्वत्सपादिवपुस्तावत्सर्वस्वरूपोऽजःकृष्णोबभावित्यर्थः उत्तरत्राप्येवंसर्वंविष्णुमयंजगदितिप्रसिद्धायागीस्तस्याअङ्गवत्तागीरेवार्थस्वरूपेणप्रत्यक्षायथातथाबभूवेत्यर्थः १९ एवंसर्वात्मासन्व्रजेप्राविशत्कथंस्वयमात्मैवप्रयोजकस्त्रात्मरूपान्गोवत्सानितिकर्मापिस्वयमेवेत्युक्तं आत्मस्वरूपैर्वत्सपैःप्रतिवार्य्यप्रयोज्यकर्ताऽपिस्व

तत्तदात्मा तत्तद्गोपबालरूपोऽभवत् ततः तत्तत्सद्मप्रविष्टः २१ गोपिकामोहनमाह तन्मातर इति तन्मातरो वेणुरवेण त्वरया उत्थिताः सत्यः सुतान्मत्वा परंब्रह्मैव दोर्भिरुदुह्य उत्थाप्य स्नेहेन स्नुतं स्तन्यं पयः सुधासवं पय एव सुधावत्स्वादु आसववन्मादकं पाययामासुरित्यर्थः २२ एवं यामयमेन च तत्तत्कालक्रीडानियमेन सायंगतः प्राप्तः स्वाचरितैः स्वस्या

तत्तद्वत्सान्पृथग्नीत्वा तत्तद्गोष्ठे निवेश्य सः तत्तदात्माऽभवद्राजन् तत्तत्सद्मप्रविष्टवान् २१ तन्मातरो वेणुरवत्वरोत्थिता उदुह्य दोर्भिः परिरभ्य निर्भरं स्नेहस्नुतस्तन्यपयःसुधासवं मत्वा परं ब्रह्म सुतानपाययन् २२ ततो नृपोन्मर्द्दनमज्जलेपनालंकाररक्षातिलकाशनादिभिः संलालितः स्वाचरितैः प्रहर्षयन् सायं गतो यामयमेन माधवः २३ गावस्ततो गोष्ठमुपेत्य सत्वरं हुंकारघोषैः परिहूतसंगतान् स्वकान्स्वकान्वत्सतरानपाययन्मुहुर्लिहंत्यः स्रवदौधसं पयः २४ गोगोपीनां मातृता ऽस्मिन्सर्वा स्नेहर्द्धिकां विना पुरोवदास्वपि हरेस्तोकता मायया विना २५॥ चरितैः शोभनैराचरितैर्वा मातॄः प्रहर्षयन् ततस्ताभिरुन्मर्द्दनादिभिरुपलालित इति २३ गवां मोहनमाह गाव इति परिहूताश्च आहूताश्च ते संगताश्च तान् २४ एतावत्तु वैषम्यं तदा सत्यापि दुर्निवारमासीदित्याह गोगोपीनामिति गवां गोपीनां च अस्मिन्कृष्णे मातृता उपलालनादिरूपा पुरोवदेव आसीत् किंतु स्नेहर्द्धिकां विना स्नेहाधिक्यं त्विदानीं विशेषवदित्यर्थः आसु गोगोपीषु हरेस्तोकता च बालभावना अपि पूर्ववदेवासीत् किंतु मायया विना ममेयं माता अहमस्याः पुत्र इति मोहं विनेत्यर्थः २५

स्नेहर्द्धिमेवदर्शयन्ति व्रजौकसामिति यथा कृष्णे यशोदानंदनेस्वपुत्रेभ्योपिस्नेहाधिक्यं पूर्वमासीदिदानींस्वतोकेष्वपि तथैवावर्द्धतेत्यर्थः आब्दंयावद्वत्सरंनिःसीमयथाभवति २६ एवमात्माश्रीकृष्णःवत्सपोभूत्वातत्रापिवत्सानांपाला नांचमिषेणात्मानमात्मनापालयन्क्रीडितवानित्यर्थः २७ एतावत्पर्यंतंरामस्यापिमोहएवासीत् संवत्सरांतरेतुक थंचिज्ज्ञातवानितिदर्शयन्नाह एकदेति पंचषासुपंचसुवाषट्सुवारात्रिषुहायनस्यापूरणीषुपूरकतयाऽवशिष्टास्वि त्यर्थः २८ ततोदूरतरएवगोवर्द्धनशिखरेचरंत्योगावोव्रजसमीपेचरतोवत्सान् ददृशुः २९ तदेवसगोव्रजःगवांक

व्रजौकसांस्वतोकेषुस्नेहवल्ल्याऽब्दमन्वहं शनैर्निःसीमववृधेयथाकृष्णेत्वपूर्ववत् २६ इत्थमात्मात्मनात्मानंवत्सपालमिषेणसः पालयन्वत्सपोवर्षंचिक्रीडेवनगोष्ठयोः २७ एकदाचारयन्वत्सान्सरामोवनमाविशत् पंचषासुत्रियामासुहायनापूरणीष्वजः २८ ततोविदूराच्चरतोगावोवत्सानुपव्रजम् गोवर्द्धनाद्रिशिरसिचरंत्योददृशुस्तृणं २९ दृ ष्ट्वाथतत्स्नेहवशोऽस्मृतात्मासगोव्रजोऽत्यात्मपदुर्गमार्गः द्विपात्ककुद्ग्रीवउदास्यपुच्छोऽ

लापः यतः तत्स्नेहवशात्तेषांवत्सानांस्नेहेनाकृष्टः अतएवनस्मृतः आ ऽऽ गाद्धुंकृतैरास्नुपयाजवेन ३० त्मायेनसः जवेन उपव्रजमगात्कथंभूतः अत्यात्मपदुर्गमार्गः अतिक्रांतः आत्मपान्गोपालान्यः सोऽत्यात्मपः नयादुर्गोदुर्गमोमार्गोयस्यसः सचसचतथायुक्ताभ्यांपद्भ्यांधावन् द्विपादिवप्रतीयमानः ककुदिआकुंचिताग्रीवा यस्यसः उदास्यपुच्छः उन्नमितान्यास्यानिपुच्छानिचयेनसः आस्नुपयाः सर्वतः स्रवंतिपयांसियस्यसः आस्नुपयाइ

तत्रविशेषतो धेनूनां चेष्टितमाह समेत्येति गोवर्द्धनस्याधः वत्सवत्यः पुनः प्रसूतास्ता अपि ३१ रामेण दृष्टं वत्सेषु गवां स्ने-
हातिशयं [illegible] गोपानामपि दर्शयितुमाह गोपा इति तासां गवां रोधने य आयासस्तस्य मौघ्येन मोघत्वेन लज्जया सहो-
रुमन्युना दुर्गमार्गजनितक्लेशेन चाभ्येत्य गोवत्सैः सह सुतान्ददृशुः ३२ ततश्च तेषामीक्षणेनोद्गतो यः प्रेमरसस्तस्मिन्नाप्लु-
ताः निमग्नाः आशया येषां ते लज्जामन्युकृच्छ्रैस्तानपि ताडयितुमागताः संतोऽपगतमन्यवः प्रत्युत जातोनुरागो येषां ते मू-

समेत्य गावोऽधो वत्सान्वत्सवत्योऽप्यपाययन् गिलंत्य इव चांगानि लिहंत्यः स्वौधसं पयः ३१ गोपास्तद्रोधनायासमौघ्यलज्जोरुमन्युना दुर्गाध्वकृच्छ्रतोऽभ्येत्य गोवत्सैर्ददृशुः सुतान् ३२ तदीक्षणोत्प्रेमरसाप्लुताशया जातानुरागा गतमन्यवोऽर्भकान् उदुह्य दोर्भिः परिरभ्य मूर्द्धनि घ्राणैरवापुः परमां मुदं ते ३३ ततः प्रवयसो गोपास्तोकाश्लेषसुनिर्वृताः कृच्छ्राच्छनैरपगतास्तदनुस्मृत्युदश्रवः ३४ व्रजस्य रामः प्रेमर्द्धैर्वीक्ष्यौत्कंठ्यमनुक्षणं मुक्तस्तनेष्वपत्येष्वप्यहेतुविदचिंतयत् ३५ किमेतदद्भुतमिव वासुदेवेऽखिलात्मनि ॥ छ ॥

र्ध्नि घ्राणैरवघ्राणैः परमां मुदमवापुः ३३ कृच्छ्रात्ततोऽपगताः निवृत्तास्तेषां सुतानामनुस्मृत्या उद्गच्छंत्यश्रूणि येषां ते । राम
३४ प्रेमर्द्धैरौत्कंठ्यमतिशयं मुक्तस्तनेष्वपत्येषु वीक्ष्य हेतुमजानन् अचिंतयत् ३५ चिंतामेवाह द्वाभ्यां किमेतदिति
वासुदेवे यथा पुरा प्रेम तथा स्वतोकेष्वपि व्रजस्य प्रेम वर्द्धते किमेतदद्भुतमिति किंच ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥ ४६

सात्मनः मत्सहितस्य व्रजस्य ममतेषु प्रेमकारणं किमिति भावः ३६ केयं माया देवानां वा नराणां वा असुराणां वा कुतो वा कस्मात् प्रयुक्ता तत्राऽन्यमाया न संभवति यतो ममापि मोहो वर्त्तते अतः प्रायशो मत्स्वामिनः श्रीकृष्णस्यैव मायेयमस्त्विति संभावयति ३७ सवयसान्सखीनपि वयुनेन ज्ञानमयेन चक्षुषा वैकुंठं श्रीकृष्णमेवापश्यत् ३८ एवं कृष्णरूपान् सामान्यतो ज्ञात्वा कृष्णं दृष्ट्वा कृष्णापदेशेन विशेषतो ज्ञातवानित्याह नैत इति अयमर्थः पाल्यमानास्तावत् वत्सा ऋषीणामंशाः पालाश्च देवानामंशाः

व्रजस्य सात्मनस्तोकेष्वद्धा पूर्ववत्प्रेम वर्द्धते ३६ केयं वा कुत आयाता दैवी वा नार्युतासुरी प्रायो मायाऽस्तु मे भर्त्तुर्नान्या मेऽपि विमोहिनी ३७ इति संचिंत्य दाशार्हो वत्सान्सवयसानपि सर्वानाचष्ट वैकुंठं चक्षुषा वयुनेन सः ३८ नैते सुरेशा ऋषयो न चैते त्वमेव भासीश भिदाश्रयेऽपि सर्वं पृथक्त्वं निगमात्कथं वदेत्युक्तेन वृत्तं प्रभुणा बलोऽवैत् ३९ तावदेत्यात्मभूरात्ममानेन त्रुट्यनेहसा पुरोवदब्दं क्रीडंतं ददृशे सकलं हरिं ४० यावंतो गोकुले बालाः सवत्साः सर्व एव हि मायाशये शयाना मे नाद्यापि पुनरुत्थिताः ४१॥ इति तावदहं वेद्मि इदानीं तु न तथा किंतु अस्मिन् भिदाश्रयेऽपि त्वमेव भासि अतस्त्वं सर्वं पृथग्विविच्य कथं वृत्तमिति वदेत्युक्तेन प्रभुणा वक्त्रान्निगमात् संक्षेपत एवोक्तं वृत्तं बलोऽवैत् विदितवानित्यर्थः ३९ ततः किं वृत्तमित्यपेक्षायामाह तावदिति वर्षे जाते आत्मनो मानेन त्रुट्यनेहसा त्रुटिमात्रेण कालेन सकलं सानुचरं हरिं ददर्श ४० दृष्ट्वा च यत्तर्कयेदित्याह द्वाभ्यां यावंत इति मे मायाशये मन्मायातल्पे ४१

९२
भा०द०
पू०
४७

मन्मायामोहितेभ्य इतरेकुत्रत्याः ४२ इतिवितर्कयन्नमुह्यदित्याह एवमितिद्वाभ्यां एवमेतेषुभेदेषुचिरंध्यात्वासआत्मभूः
रितिचपाठः ४३।४४ ननुमायाश्रयस्यतस्यकुतोमोह इत्यतआह तम्यामिति महामायाविनिभगवतिअन्यमायायाः
आवरणविक्षेपकत्वाभावेदृष्टांतद्वयमाह तम्यांतमिस्त्रायांरात्र्यांनैहारंहिमकणप्रभवंतमइव तद्धित्ता थौपसर्जन

इतएतेऽत्रकुत्रत्यामन्मायामोहितेतरे तावंतएवतत्राब्दंक्रीडंतोविष्णुनासमं ४२
एवमेतेषुभेदेषुचिरंध्यात्वासआत्मनि सत्याःकेकतरेनेतिज्ञातुंनेष्टकथंचन ४३
एवंसंमोहयन्विष्णुंविमोहंविश्वमोहनं स्वयैवमाययाऽजोपिस्वयमेवविमोहितः ४४
तम्यांतमोवन्नैहारंखद्योतार्चिरिवाहनि महतीतरमायैश्यंनिहंत्यात्मनियुंजतः ४५
तावत्सर्वेवत्सपालाःपश्यतोऽजस्यतत्क्षणात् व्यदृश्यंतघनश्यामाःपीतकौशेयवाससः
४६ चतुर्भुजाःशंखचक्रगदाराजीवपाणयः किरीटिनःकुंडलिनोहारिणोवनमालिनः ४७
श्रीवत्सांगददोरत्नकंबुकंकणपाणयः नूपुरैःकटकैर्भाताःकटिसूत्रांगुलीयकैः ४८

स्यापितमसोनैहारमितिविशेषणंछांदसं नत्तमोयथापृथगावरणंनकरोतिकिंतुतत्रैवलीयतेयथाचखद्योतार्चिरहनि
पृथक्प्रकाशंनकरोति एवंमहतिपुरुषेयुंजतःपुंसः इतरानीचामायातथातत्रनकिंचित्करोतिकिंतुआत्मनिस्वसिन्नेवऐश्वर्यं
सामर्थ्यंनिहंतीति ४५ अन्यदप्याश्चर्यमाह तावदिति वत्सपालावत्साःपालाश्चसर्वेयष्टिविषाणादयश्च ४६ ४७ श्रीवत्सप्रभा

कौस्तुभांगदानिदोःषुयेषांरत्नमयानिकंबुवत्त्रिधाराणिकंकणा
निपाणिषुयेषांतेचतेच ४८ ॥

९

तथाभूरिबहुजन्मार्जितंपुराएंतद्युक्तैर्ज्जनैरर्पितैः ४९ चंद्रिकाविशदस्मितयुक्तैःसहारुणगुणेनचवर्तमानायेऽपांगास्तैर्वीक्षि
तैःस्वकार्थ्यानांस्वभक्तमनोरथानांरजःसत्वाभ्यांस्वपृपालकाइवयदृश्यंत सत्ववद्विशदस्मितेनपालकाइवरजोवदरुणगुणेनच
स्वस्थारइवताहक्कटाक्षैर्द्योतमानाइत्यर्थः ५० आत्माब्रह्मातदादिस्तंबपर्यंतैरनेकार्हैरनेकार्हणैः ५१ अजाद्याभिर्मायाविद्यादि
भिर्विभूतिभिःशक्तिभिःमहदादिभिरिति महत्त्वत्रयोरपृथत्कविवक्षयाचतुर्विंशतितत्वैर्ज्जगत्कारणैः ५२ कालादिभिश्चतत्स

अंघ्रिमस्तकमापूर्णास्तुलसीनवदामभिः कोमलैःसर्वगात्रेषुभूरिपुण्यवदर्पितैः ४९
चंद्रिकाविशदस्मेरैःसारुणापांगवीक्षितैः स्वकार्थ्यानामिवरजःसत्वाभ्यांस्वपृपालकाः ५०
आत्मादिस्तंवपर्य्यंतैर्मूर्तिमद्भिश्चराचरैः नृत्यगीताद्यनेकार्हैःपृथकपृथगुपासिताः ५१ अ
णिमाद्यैर्म्महिमभिरजाद्याभिर्विभूतिभिः चतुर्विंशतिभिस्तत्वैःपरीतामहदादिभिः ५२ काल
स्वभावसंस्कारकामकर्मगुणादिभिः स्वमहिध्वस्तमहिभिर्मूर्तिमद्भिरुपासिताः ५३ सत्यज्ञा
नानंतानंदमात्रैकरसमूर्त्तयः अस्पृष्टभूरिमाहात्म्याअपिह्युपनिषद्दृशां ५४ ॥ हकारिभिश्चतत्र

स्वभावःपरिणामहेतुः संस्कारःवासनाउद्बोधकःस्वमहिध्वस्तमहिभिःभगवन्महिम्नातिरस्कृतस्वातंत्र्यैः उक्तैःसर्वैरणिमाद्यैः ५३
सर्वेषांमूर्तिमत्वेपिविशेषमाह सत्यज्ञानेति सत्याश्चतेज्ञानरूपाश्चअनंताश्चआनंदरूपाश्चतत्रापितदेकमात्राविजातीयसंभे
दरहिताःतत्रापिचएकरसाः सदैकरूपामूर्त्तयोयेषांतेषांतेयद्वा सत्यंज्ञानादिमात्रैकरसंयद्ब्रह्मतदेवमूर्त्तयोयेषामिति अतए
वउपनिषत् आत्मज्ञानंसैवदृक्चक्षुर्येषांतेषामपिहिनिश्चितंअस्पृष्टभूरिमाहात्म्याःनस्पृष्टंनस्पर्शयोग्यंभूरिमाहात्म्यं येषां

द्वि॰ भा॰ टी॰ पृ॰ ४८

एवंसकृद्देकैदेवददर्शपरब्रह्मणोविशेषणंयस्येति ५५ अतिकुतुकेन आश्चर्येणउद्वृत्यदृष्टीः परावृत्यहंसपृष्ठेनिपत्येति वा
कुतुकशब्देतृतीयायाश्छांदसोलुक् यद्वा उद्वृत्यइतिछेदः अतिकुतुकेनउद्वृत्यः विलोड्यः विपर्यस्तः सन्निति पावत् पा
दांतरेतु अतिकुतुकेनउद्वृत्तः क्षुभितस्तेषांधाम्नातेजसास्तब्धसर्वेंद्रियोब्रह्मातूष्णींनिश्चलोऽभूत् अत्रदृष्टांतः पूर्देवीव्रजाधि
ष्ठात्रीकाचिद्देवतातस्या अंतिसमीपेपुत्रिकाचतुर्मुखीकृतकप्रतिमेव ५६ एवंमोहमग्नमजमुज्जहारेत्याह इतीति इरेशेइरा
सरस्वतीतस्याईशेब्रह्मणिकिमिदमितिमुह्यतिसतिपश्चात्तद्द्रष्टुमप्यनीशेसतिपरमोऽजः श्रीकृष्णः सपदिस्वजाजवनिकां

एवंसकृद्ददर्शाजः परब्रह्मात्मनोऽखिलान् यस्यभासासर्वमिदंविभातिसचराचरं ५५
ततोऽतिकुतुकोद्वृत्यस्तिमितैकादशेंद्रियः तद्धाम्नाऽभूदजस्तूष्णींपूर्देव्यंतीवपुत्रिका।
५६ इतीरेशेऽतर्क्येनिजमहिमनिस्वप्रमितिकेपरत्राजातोऽतन्निरसनमुखब्रह्मकमितौ
अनीशेपिद्रष्टुंकिमिदमितिवामुह्यतिसतिचच्छादाजोज्ञात्वासपदिपरमोऽजाजवनिकां ५७

मायारूपांतिरस्कारिणींययाऽद्भुतंदर्शितंतांचच्छादः तिरोऽधत्त अपसारितवानित्यर्थः अथवाऽयंलोकाभिमानीममैश्व
र्यंद्रष्टुमयोग्य इतितस्योपरिमायांप्रसारितवानिति कमुह्यतिसति अतर्क्येतर्कागोचरेनिजः असाधारणोमहिमा।
यस्यतस्मिन्निति मोहे हेतुरुक्तः दर्शनायोग्यत्वायत्रीणिविशेषणानिस्वप्रमितिकेस्वप्रमितिस्वप्रकाशंचतत्कंसुखं
चयस्मिन् अतएवअजातः प्रकृतेः परत्रपरस्मिन् अतन्निरसनमुखेनब्रह्मकैः श्रुतिशिरोभिर्मितिर्ज्ञानंयस्मिन्॥ ४८

अर्वाक्बहिः प्रतिलब्धानिअक्षीणियेनसः परेतवन्मृतोयदिकथंचित्पुनरुत्तिष्ठतितथादृष्टीः नेत्राणि ५९ जनानामाजीव्यैर्द्रुमैराकीर्णंसमाप्रियंसंततानिआसमंतात्प्रियाणियस्मिनतत् ५९ तदाहयत्रेति नैसर्गदुर्वैराः स्वाभाविकाप्रतिकार्यवैरवंतोपिनराः सिंहादयश्चमित्राणीवयत्रसहैवासन् अजितस्यावासेनद्रुताः पलायिताःरुट्तर्षादयः क्रोधलोभादयोयस्मात्तथाभूतंवृंदावनमपश्यदिति ६० तत्रचपरमेष्ठीब्रह्माएवपुरापूर्ववदेवब्रह्म अचष्ट अपश्यत्कथंभूतंपशुप

ततोऽर्वाक्प्रतिलब्धाक्षः कः परेतवदुत्थितः कृच्छ्रादुन्मील्यवैदृष्टीराचष्टेदंसहात्मना।
५९ सपद्येवाभितः पश्यन्दिशोऽपश्यत्पुरःस्थितं वृंदावनंजनाजीव्यद्रुमाकीर्णंसमाप्रियं ५९ यत्रनैसर्गदुर्वैराःसहासन्नृमृगादयः मित्राणीवाऽजितावासद्रुतरुट्तर्षकादिकं।
६० तत्रोद्वहत्पशुपवंशशिशुत्वनाट्यंब्रह्माद्वयंपरमनंतमगाधबोधं वत्सान्सखीनिवपुरापरितोविचिन्वदेकंसपाणिकवलंपरमेष्ठ्यचष्ट ६१ दृष्ट्वात्वरेणनिजधोरणतोऽवतीर्य्यपृथ्व्यांवपुःकनकदंडमिवातिपात्य स्पृष्ट्वाचतुर्मुकुटकोटिभिरंघ्रियुग्मंनत्वामुदश्रु

वंशशिशुत्वनाट्यमुद्वहत् नाट्यमित्यत्रहेतुः अद्वयमित्यादि अद्वयंच ७ सुजलैरकृताऽभिषेकं ६२।
वत्सान्विचिन्वत् एकंचसखीन् अगाधबोधंचविचिन्वत् अनंतंचपरितोविचिन्वत्परंचशिशुत्वमुद्वहत्ब्रह्मचसपाणिकवलमितिनाट्यमेवोद्वहदित्यर्थः ६१ निजधोरणतः स्ववाहनात्त्वरेणवेगेनावतीर्यदंडवन्नत्वाचतुर्णांमुकुटानामग्रैरंघ्रियुग्मंस्पृष्ट्वामुदश्रुसुजलैरानंदाश्रुरूपैः सुजलैरभिषेकमकरोदित्यर्थः॥ ६२॥ ७॥ ७॥ ७॥ ७॥ ७॥ ॥

१४
भा०द०
पू०
४९

चिरस्यचिरंपादयोःपतन्नास्ते ६३ सवेपथुःसकंपः अतएवगद्गदयाऽनुकरणमेतत् इलयावाचारेलन अस्तौत ॥ ६३ ॥
इतिश्रीदशमेटीकायांत्रयोदशोध्यायः १३ १३ चतुर्दशेऽद्भुतंदृष्ट्वापूर्वोगंतुकनिश्चयं अनीशःकर्तुमस्तौषीतत्क्षमस्वंब्र
ह्माविमोहितः १ स्वकृतापराधेनभियासकंपतया भगवन्महिमानमनवगाहमानोयथादृष्टस्वरूपमेवकीर्तयन्नाह नौ
मीति हेईड्यस्तुत्यंतेतुभ्यंनौमि द्वितीयार्थेचतुर्थी अथवानौमीत्युक्त्वाप्रकरणागतस्यप्रस्तुतस्यभगवतःकर्मत्वेज्ञातेप्रयो
जनापेक्षायामेवंभूतोभगवानेवप्रयोजनमितितादर्थ्येचतुर्थी यद्वातुभ्यंत्वामेवप्रसादयितुंत्वामेवस्तौमीत्यर्थः अभ्रव

उत्थायोत्थायकृष्णस्यचिरस्यपादयोःपतन्नास्तेमहित्वंप्राग्दृष्टंस्मृत्वास्मृत्वापुनःपुनः ६२
शनैरथोत्थायविमृज्यलोचनेमुकुंदमुद्वीक्ष्यविनम्रकंधरः कृतांजलिःप्रश्रयवान्समा।
हितःसवेपथुर्गद्गदयैलतैलया ६४ इतिश्रीभागवतेमहापुराणेदशमस्कंधेब्रह्ममोह
नंनामत्रयोदशोध्यायः १३ ब्रह्मोवाच नौमीड्यतेऽभ्रवपुषेतडिदंबरायगुंजावतंसपरि
पिच्छलसन्मुखाय वन्यस्रजेकवलवेत्रविषाणवेणुलक्ष्मश्रियेमृदुपदेपशुपांगजाय
१ अस्यापिदेववपुषोमदनुग्रहस्यस्वेच्छामयस्यनतुभूतमयस्यकोऽपि ॥ दूपुर्यस्यतस्मैतुभ्य

म् तडिद्वदंबरंयस्यतस्मैगुंजानामवतंसौकर्णभूषणेपरितःपिच्छंबर्हापीडैर्लसन्मुखंयस्यतस्मैवन्याःस्रजोयस्यत।
स्मैकवलादिभिर्लक्ष्मभिःश्रीःशोभायस्यतस्मैमृदूपादौयस्यतस्मैपशुपस्यांगजाय १ ननुनौमीतिप्रतिज्ञायकिंस्वरूपानुवा
दमात्रंक्रियतेअतआह अस्यापीति भोदेवअस्यापिसुलभत्वेनप्रकाशितस्यापितववपुषः ॥ अवतारस्यमहिमहिमानं

रम
४९

अवसितुंज्ञातुंकोऽपिकः ब्रह्माअहमपिनईशेनशक्नोमि यद्वा कश्चिदपिनईशेनसमर्थआसीत सुलभत्वायविशे
षणद्वयंमदनुग्रहस्यममानुग्रहोयस्मात्तन्मदनुग्रहंतस्य किंचस्वेच्छामयस्यस्वीयानांभक्तानांयथायथेच्छातथातथा
भवतः तर्हिकिमितिज्ञातुंनशक्यतअतआह नतुभूतमयस्य अचिंत्यशुद्धसत्वात्मकस्ययदाऽस्यैवंतदाकथंपुनः साक्षा
त्तवकेवलस्यआत्मसुखानुभूतेरवस्वसुखानुभवमात्रस्यावतारिणोगुणातीतस्यमहिमानंअंतरेणनिरुद्धेनापिमनसा
कोवाज्ञातुंसमर्थोभवेत अथवाभूतमयस्यउक्तलक्षणस्यापिविराड्रूपस्यतवत्वन्नियम्यस्यवपुषः महिमानमेवअवसि
तुंकोपिनेशतदासाक्षात्तवैवासाधारणस्यनियम्यनियंतृभेदरहितस्यउक्तलक्षणस्यास्यमहिमानंअवसितुंकोपिनेशइति

नेशेमहित्वऽवसितुंमनसांतरेणसाक्षात्तवैवकिमुतात्मसुखानुभूतेः २ ज्ञानेप्रयासमुद
पास्यनमंतएवजीवंतिसन्मुखरितांभवदीयवार्त्तां स्थानेस्थिताः श्रुतिगतांतनुवाङ्मनो
भिर्येप्रायशोऽजितजितोप्यसितैस्त्रिलोक्यां ३ श्रेयःस्रुतिंभक्तिमुदस्यतेविभोक्लिश्यंति

किमुवक्तव्यमित्यर्थः २ तर्हिअज्ञाःकथंसंसारंतरेयुरतआहज्ञानइतिहेअ ५ येकेवलबोधलब्धये ॥
जितउदपास्यईषदप्यकृत्वासद्भिर्मुखरितास्वतएवनित्यंप्रकटितांभवदीयवार्त्तांस्वस्वस्थानएवस्थिताः तत्सन्निधिमा
त्रेणस्वतएवश्रुतिगतांश्रवणंप्राप्तांतनुवाङ्मनोभिर्नमंतः सत्कुर्वंतोयेजीवंतिकेवलंयद्यपिनान्यत्कुर्वंतितैः प्रायश
स्त्रिलोक्यामन्यैरजितोपित्वंजितः प्राप्तोऽसीति किंज्ञानश्रमेणेत्यर्थः ३ भक्तिंविनातुज्ञानंनैवसिद्ध्येदित्याह श्रेयःस्रुतिमि
ति श्रेयसांअभ्युदयापवर्गलक्षणानांस्रुतिः स्रवणंयस्याःसरसइवनिर्झराणांतांतेतवभक्तिमुदस्यत्यक्त्वाश्रेयःसृतिमितिपाठे

मार्गभूतामिति तेषां क्लेशलः क्लेश एवावशिष्यते अयंभावः यथा अल्पप्रमाणंधान्यं परित्यज्य अंतःकणहीनान् स्थूल
धान्याभासान् तुषानेव येऽवघ्नंति तेषां न किंचित्फलं एवं भक्तिं तु च्छीकृत्य ये केवलबोधाय प्रयतंते तेषामपीति ४ भक्त्यैव ज्ञा
नं नान्यथेत्यत्र सदाचारं प्रमाणयति पुरेति हे भूमन् इह लोके पूर्वे योगिनोपि संतः योगैर्ज्ञानमप्राप्य पश्चात्त्वदर्पितेहाः त्वयि
अर्पिता लौकिक्यपि ईहा चेष्टा यैस्ते निजकर्मलब्धया त्वदर्पितैर्निजैः कर्म्मभिर्लब्धया त्वय्यर्पिता ईहा च निजानि कर्म्माणि
च तैर्लब्धया इत्येकं पदं वा कथोपनीतया कथया स्वसमीपं प्रापितया भक्त्यैव विबुध्य आत्मानं ज्ञात्वा अंजः सुखेनैव ते परां गतिं प्रा
प्ताः ५ एवं तावत्सगुणनिर्गुणयोरुभयोरपि ज्ञानं दुर्घटमिति त्वत्कथाश्रवणादिनैव तत्प्राप्तिर्नान्यथेत्युक्तं इदानीं यद्यप्युभ

तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनां ४ पुरेह भूमन् बहवोपि यो
गिनस्त्वदर्पितेहा निजकर्मलब्धया विबुध्य भक्त्यैव कथोपनीतया प्रपेदिरेंऽजोऽच्युत
ते गतिं परां ५ तथापि भूमन्महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलांतरात्मभिः ॥ योरविशेषेण

दुर्विज्ञेयत्वमुक्तं तथापि गुणातीतस्य ज्ञानं कथंचिद्भवेत् न तु सगुणस्य तवाचिंत्यानंतगुणत्वादिति सतो त्रिश्लोकद्वये
न तथापीति हे भूमन् अपरिच्छिन्न अगुणस्य ते महिमा अमलैरंतरात्मभिः प्रत्याहृतैरिंद्रियैर्विबोद्धुं बोधगोचरीभवितुं अ
र्हतीति योग्यो भवति अथवा विबोद्धुं ज्ञातुं ——— अर्ह्यते शक्यत इत्यर्थः यद्वा महिमंतं महिमानं कश्चिद्वि
बोद्धुमर्हतीत्यर्थः कथं स्वानुभवात् आत्माकारांतःकरणसाक्षात्कारात् नन्वंतःकरणमपि सविकारमेव विषयीकरो
तीति कथमात्माकारता तस्येति अत आह अविक्रियादिति विक्रिया विशेषाकारस्तद्रहितात् विशेषपरित्याग एवात्म

नन्वंतःकरणसाक्षात्कारविषयत्वेऽनात्मत्वप्रसंगःस्यादतआह अरूपतइति रूपंविषयः अविषयात् वृत्तिविषयत्वमेवात्मनोनफलविषयत्वमतोनायंदोषइतिभावः कथंतर्हिस्फूर्तिः अनन्यबोध्यात्मतयास्वप्रकाशत्वेनैवनत्वन्यथा इदंतदितिविषयत्वेनेत्यर्थः बुद्धितत्स्थचिदाभासौद्वावेतौव्याप्नुतोघटम् तत्राज्ञानंधियानश्येदाभासेनघटःस्फुरेत् इतिअनात्मसु आत्मनितु ब्रह्मण्यज्ञाननाशायवृत्तिव्याप्तिरिहेष्यते स्वयंस्फुरणरूपत्वान्नाभासस्तत्रयुज्यतइति अथवा मासर्वतोंतरंगालक्ष्मीरपि अगुणस्यतेमहिमहिमानंअमलैरंतर्वृत्तिभिरिंद्रियैरपियथायाद्दृग्वस्तुतस्तेनरूपणविबोद्धुंकिमर्हतिनार्हत्येवेत्यर्थःकथंतर्ह्यर्हतितदाह स्वानुभवादित्यादिनाउक्तार्थमेवैतत् ६ गुणात्मनःगुणानामा

अविक्रियात्स्वानुभवादरूपतोह्यनन्यबोध्यात्मतयानचान्यथा ६ गुणात्मनस्तेपिगुणान्विमातुंहितावतीर्णस्यकईशिरेऽस्यकालेनयैर्वाविमिताःसुकल्पैर्भूपांसवःखेमिहिकाद्युभासः ७ तत्तेऽनुकंपांसुसमीक्षमाणोभुंजानएवात्मकृतंविपाकं ८

त्मनःगुणाधिशातुस्तेनवपुनर्गुणान्विमातुंएतावंतइतिगणयितुमपिकेईशिरेसमर्थाबभूवुःदूरतस्तद्विशेषवार्त्ताकथंभूतस्यतव अस्यविश्वस्यहितायपालनायबहुगुणाविष्कारेणावतीर्णस्यननुकालेननिपुणैःकिमशक्यमतआहकालेनेति वाशब्दोवितर्केसुकल्पैरतिनिपुणैर्बहुजन्मनाकालेनभूपरमाणवोविमिताःविशेषेणगणिताभवेयुःतथाखेमिहिका

हिमकणाअपितथाद्युभासःदिविनक्षत्रादिकिरणपरमाणवोपि ७ तस्माद्भक्तिरेवसंगच्छतइत्याह तत्तेनुकंपामिति सुसमीक्षमाणःतवकृपाकदाभविष्यतीतिबहुमन्यमानःस्वार्जितंचकर्मफलमनासक्तःसन्भुंजानएवनातीवतृ

१४
भा॰ द॰
पू॰
५१

आदिनाक्लिश्यन एवयोजीवेत्समुक्तो दायभाग्भवति भक्तस्यजीवनव्यतिरेकेण दायप्राप्ताविवमुक्तौनान्यदुपयुज्यत इ
तिभावः ८ तदेवंस्तुत्वाभगवंतंक्षमापयितुंस्वापराधंनिवेदयतिपश्येति हेईशमेऽनार्य्यंदौर्जन्यंपश्य यदहंमायिनामपिम्
यिनिविमोहकेत्वय्यपिस्वमायांप्रसार्य्यात्मैश्वर्य्यमीक्षितुमैच्छं अभिलषितवान् अहोएवंकर्त्तुंत्वयिअहंकियान्नकिं॥
चित्यथाऽग्नेरुद्भूताज्वालाअग्नौनकिंचित्तद्वदिति ९ रजोभुवः रजसोजातस्यअतः अजानतः अतएवअजावलेपांधन
मोंधचक्षुषः अजोजगत्कर्त्ताऽहमितिमदेनगाढतमोरूपेणांधीभूतेनेत्रेयस्यअतस्त्वत्तः पृथगीशमानिनः अन्यत्रप्रभुत्वेनवर्त्ते

दृष्ट्वाद्यगवपुर्भिर्विदधन्नमस्तेजीवेतयोमुक्तिपदेसदायभाक् ८ पश्येशमेऽनार्य्यम
नंतआद्येपरात्मनित्वय्यपिमायिमायिनि मायांवितत्येक्षितुमात्मवैभवंह्यहं।
कियानैच्छमिवार्चिरग्नौ ९ अतःक्षमस्वाच्युतमेरजोभुवोह्यजानतस्त्वत्पृथगी
शमानिनः अजाऽवलेपांधतमोंऽधचक्षुषएषोनुकंप्योमयिनाथवानिति १० ॥
क्वाहंतमोमहदहंखचराग्निवार्भूसंवेष्टितांडघटसप्तवितस्तिकायः॥ ११ ॥

मानोपिमयिनाथेसतिनाथवान् मद्भृत्यस्त्व अतएषोऽनुकंप्यइतिमत्वाक्षमस्वेत्यर्थः १० ननुब्रह्मांडविग्रहस्त्वम
पिईश्वरएवेतिचेत्तत्राह क्वाहमिति॰ तमःप्रकृतिः महान्महत्तत्वं॰ अहंअहंकारः खमाकाशः चरोवायुः अग्निः वाःजलं
भूःप्रकृत्यादिपृथिव्यंतैः एतैः संवेष्टितोयोंऽडघटः सएवतस्मिन्वास्वमानेनसप्तवितस्तिः कायोयस्यसोऽहंक्वचेतम
हित्वं कथंभूतस्यईदृग्विधानियानिअविगणितान्यंडानितएवपरमाणवः ॥ ॥ ॥ ॥

राम

५१

तेषां चर्यापरिभ्रमणं तदर्थं वाताध्वानो गवाक्षा इव रोमविवराणि यस्य तस्य तव अतोऽतितुच्छत्वात्त्वयानुकंप्योऽहमिति ११
अपि च गर्भगतस्य शिशोः पादयोरुत्क्षेपणं मातुः किमपराधाय भवति लोके अस्ति नास्ति व्यपदेशाभ्यां भावाभावशब्दाभ्यां
स्थूलसूक्ष्मकार्यकारणशब्दैर्वा भूषितं अभिहितं एतेषां शब्दानां भुवि विषये उषितं स्थितमिति वा सर्वं वस्त्वित्यर्थः हे अधो
क्षज तव कुक्षेरनंतः बहिः कियदपि किंचिन्मात्रमपि किमस्ति न किंचिदस्तीत्यर्थः अतः सर्वस्य तव कुक्षिगतत्वेन ममापि त
थात्वान्मातृवदपराधः सोढव्य इति भावः १२ किंच विशेषतोऽपि त्वत्तो मम जन्म प्रसिद्धमित्याह जगत्त्रयेत्यादि जगत्त्रय।

क्वेदृग्विधाऽविगणिताण्डपराणुचर्य्यावाताध्वरोमविवरस्य च ते महित्वं ११ उत्क्षेपणं ग
र्भगतस्य पादयोः किं कल्पते मातुरधोक्षजाऽऽगसे किमस्ति नास्ति व्यपदेशभूषितं तवा
स्ति कुक्षेः कियदप्यनंतः १२ जगत्त्रयांतोदधिसंप्लवोदे नारायणस्योदरनाभिनाला
त् विनिर्गतोऽजस्त्विति वाङ्न वै मृषा किं त्वीश्वर त्वन्न विनिर्गतोऽस्मि १३ नारायण।
स्त्वं न हि सर्वदेहिनामात्माऽस्यधीशाऽखिललोकसाक्षी १४ स्यांते प्रलये य उदधीनां संप्लवः संश्लेष

तस्मिन्नुदे उदके नारायणस्योदरे नाभिस्तस्य नालादजो विनिर्गत इति या वाक् सा तावन्मृषा न भवति वै निश्चितं तथाऽपि
तु हे ईश्वर त्वत्तः अहं किं न विनिर्गतः नोत्पन्नोऽस्मि अपि तु त्वत्त एवोत्पन्न इत्यर्थः १३ तर्हि नारायण स्वपुत्रस्त्वं मम किमा
यातं तत्राह नारायणस्त्वमिति न हीति काका त्वमेव नारायण इत्यापादयति कुतोऽहं नारायण इति चेत्तत्राह सर्वदेहिना।
मात्माऽसीति एवमपि किं नारायणो न भवसि नारं जीवसमूहोऽयनमाश्रयो यस्य स तथेति त्वमेव सर्वदेहिनामात्मत्वान्नारायणः

श्री

८५

१४
भा०द०
पू०
५२

हे अधीश त्वंनारायणोनहीतिपुनःकाकुः अधीशः प्रवर्त्तकः ततश्चनारस्यायनंप्रवृत्तिर्यस्मात्ततथेति पुनस्त्वमेवा
सावितिकिंच त्वमखिललोकसाक्षी अखिलंलोकंसाक्षात्पश्यसि अतोनारमयसेजानासीतित्वमेवनारायणइत्यर्थः
नन्वेवंनारायणपदव्युत्पत्तौभवेदेवंतत्त्वन्यथाप्रसिद्धमित्याशंक्याह नारायणोंगमिति नरःदुद्भूतायेऽर्थाश्चतुर्विंशतित
त्वानितथानराज्जातंयज्जलंतदयनाद्योनारायणः प्रसिद्धःसोपितवैवांगमूर्त्तिः तथाचस्मर्यते नराज्जातानितत्वानि
नाराणीतिविदुर्बुधाः तस्यतान्ययनंपूर्वंतेननारायणःस्मृतइति तथाचआपोनाराइतिप्रोक्ताआपोवैनरसूनवः अ
यनंतस्यताःपूर्वंतेननारायणःस्मृतइतिच ननुमन्मूर्त्तेरपरिच्छिन्नायाःकथंजलाश्रयत्वमतआह तच्चापिसत्यंनेति १४

## नारायणोऽङ्गंनरभूजलायनात्तच्चापिसत्यंनतवैवमाया १४ तच्चेज्जलस्थंतवसज्ज गद्वपुः किंमेनदृष्टंभगवंस्तदेव किंवासुदृष्टंहृदिमेतदेवकिंनोसपद्येवपुनर्व्यदर्शि १५ अत्रैवमायाधमनावतारेह्यस्यप्रपंचस्यबहिःस्फुटस्य कृत्स्नस्यचांतर्जठरेजनन्या

अपरिच्छेदमेवोपपादयति तच्चेदिति जगदाश्रयभूतंतवतद्वपुःजलस्थमिऽ **मायात्वमेवप्रकटीकृतंते १६**
त्येवंयदिसत्तत्यस्यात्तर्हितदेवकमलनालमार्गेणांतःप्रविश्यसंवत्सरशतंविचिन्वताऽपिमयाहेभगवन्नचिंत्यैश्वर्यत
त्रकिमितिनदृष्टंसद्वपुः किंतुअंतःकरणहृष्यंतदात्द्यपिकिमितिनोव्यदर्शिनदृष्टं तदेवतपःकरणानंतरंसपद्येवसु
दृष्टं अतोमायैवअतस्त्वन्मूर्तेर्देशविशेषपरिच्छेदःसत्योनभवतीत्यर्थः १५ अपिचयदिजलादिप्रपंचःसत्यःस्यात्तर्हि
तेननवपरिच्छेदोभवेत्सतुमायाविलसितइतित्वयैवदर्शितंइत्याहश्लोकत्रयेण हेमायाधमन मायोपशमन अत्रैवाव
तारेबहिःस्फुटस्यापिआत्मनोजठरमध्येजनन्याःप्रदर्शनेन १६ ॥ ७ ॥ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ

राम
५२

ननुबहिः सतस्वांतर्जठरेप्रतिबिंबोस्तुकुतः सर्वथामायात्वंतत्राहयस्येति यस्यतवकुक्षौसर्वमिदंयथाभातितत्सर्वंइहापि
वहिरपितथैवभाति किंचसात्मंत्वत्सहिततदिदंसर्वंत्वयिमाययाविनाकिंघटेतअयंभावः त्वयिप्रतिबिंवश्चेद्दात्याद्विलौम
तयाप्रतीयेत ननुतदस्ति तवचादर्शस्थानीयस्यत्वयिप्रतीतिर्नस्यात् अतःसर्वथामिथ्यात्वमेवेति १७ अपिचनकेवलंज
नन्याः ममापितथैवदर्शितमित्याह अद्यैवेति त्वदृतेत्वांविनाअस्यविश्वस्यमायात्वंत्वयाममैवचतदप्यद्यैवकिंनदर्शितं
किंतुदर्शितमेव तथाहिएकोसीत्यादितततोमयासहाखिलैस्तत्वादिभिरुपासितास्तावंतश्चतुर्भुजाअसिजगंतिब्रह्मांडानीति

यस्यकुक्षाविदंसर्वंसात्मंभातियथातथा तत्त्वय्यपीहतत्सर्वंकिमिदंमाययाविना १७
अद्यैवत्वदृतेऽस्यकिंममनतेमायात्वमादर्शितमेकोऽसिप्रथमंततोव्रजसुहृद्वत्साःसम
स्ताअपि तावंतोऽसिचतुर्भुजास्तदखिलैः साकंमयोपासितास्तावंत्येवजगंत्यभूस्तद
मितंब्रह्माद्वयंशिष्यते १८ अजानतांत्वत्पदवीमनात्मन्यात्मात्मनाभासिवितत्यमायां
सृष्टाविवाहंजगतोविधानइवत्वमेषोऽंतइवत्रिनेत्रः ॥ १९ ॥ प्रागनुक्तमपिदृष्टमितिज्ञातव्यं।

॥ १८ ॥ ननुब्रह्मन्नतवमयादर्शितंशुद्धमेवचैतन्यंकथंप्रपंचवन्मायित्वमुच्यतेसत्यं किंतुअद्वितीयेत्वयिनानात्वं।
गुणावतारमत्स्याद्यवतारेष्विवकार्य्यवशेनस्वतंत्रमायानिवंधनमित्याहश्लोकद्वयेन अजानतामितित्वत्पदवींत
वस्वरूपमजानतां अनात्मनिप्रकृतौस्थितः आत्मैवत्वं आत्मनैवस्वातंत्र्येणमायांवितत्यभासि कथंजगतः सृ
॥ष्टावहमिवब्रह्मेवविधानेपालनेचएषत्वमिवअंतेत्रिनेत्रइवेति १९ ॥ ६ ॥

सुरेषु उपेन्द्रः ऋषिषु परशुरामः नृष्वपि रामः २० ननु च स्वातंत्र्ये कथं कुत्सितेषु मत्स्यादिषु जन्म कथं वा वामनाद्यवतारे याच्ञादिकार्पण्यं कथं वाऽस्मिन्नेव कदाचिद्भयपलायनादि अत आह कोवेत्तीति अन्वर्थैः संबोधनैः दुर्ज्ञेयत्वमेवाह भूमन्नित्यादिभिः भवत ऊती लीलास्त्रिलोक्यां को वेत्ति क्व वा कथं वा कदा वा कति वेत्ति अचिंत्यं तव योगमायावैभवमिति भावः २१ ननु भवत्वऽवतारणामचिंत्यो महिमा प्रपंचस्य त्वऽसत्वे कथं सत्त्वप्रतीतिरिती माऽऽशंकां सपरिकरमुपसंहरन्परिहरति तस्मादिति अस्तधिषणं निरस्तप्रतिभासं त्वय्येव उद्यत उद्भवत अपि यन्नश्यत् सदिवेति उपलक्षण

सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्य्यक्षु यादस्स्वऽपि तेऽजनस्य जन्माऽसतां दुर्मदनिग्रहाय प्रभो विधातः सदनुग्रहाय २० को वेत्ति भूमन्भगवन्परात्मन्योगेश्वरोतीर्भवतस्त्रिलोक्यां क्व वा कथं वा कति वा कदेति विस्तारयन्क्रीडसि योगमायां २१ तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरुदुःखदुःखं त्वय्येव नित्यसुखवोधतनावनंते मायात उद्यदपि यत्सदिवावभाति २२ एकस्त्वमात्मा पुरुषः पुराणः स

मेतत् नित्यमिव सुखमिव चेतनमिव अधिष्ठानभूतस्य तव गुणैः तथात ॐ त्यः स्वयंज्योतिरनंत आद्य

थाभातीत्यर्थः २२ त्वमेव तु सत्य इत्याह एकस्त्वं सत्यः कुतः आत्मा दृश्यमसत्यं दृष्टं न चात्मा दृश्यः अतः सत्यः किंच यद्विकारवत् तदसत्यं न च त्वयि जन्मादयो विकाराः संतीत्याह आद्यः कारणं अतो न जन्म आद्यत्वे हेतुः पुराणः पुराऽपि नवः कार्यात्पूर्वमपि वर्त्तमान इत्यर्थः अत्र हेतुः पुरुष इति तथा च श्रुतिः पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वमिति

जन्मानंतरा ऽस्तित्वलक्षणंविकारंवारयति नित्यइति सनातनइत्यर्थः पूर्णः अजस्रसुखः ॥ अक्षर अमृ
तइतिचतुर्भिः पदैः क्रमेणवृद्धिविपरिणामापक्षयविनाशान्वारयति पूर्णत्वेहेतुः अनंतअद्वयइतिचदेशका
लपरिच्छेदरहितः वस्तुपरिच्छेदरहितोपि अमृतत्वोपपादनायचतुर्विधक्रियाफलत्वंवारयतिस्वयंज्योतिर्निरंजन
उपाधितोमुक्तइतिपदत्रयेण अयंभावः तत्रोत्पत्तिराप्यइत्यनेनैवनिराकृताप्राप्तिरपिक्रिययाज्ञानेनवाभवेत्क्रिययाप्रा
प्तिरात्मपदेनैवनिराकृताज्ञानतः प्राप्तिंवारयतिस्वयंज्योतिरितिविकृतिरपितुषापाकरणेनावघातेनव्रीहीणामिवउपाध्य
पाकरणेनभवेत्तच्चासंगत्वान्नसंभवतीत्याह मुक्तउपाधितइति संस्कारोऽपिकिमप्यतिशयाधानेनमलापाकरणेन

नित्योऽक्षरोऽजस्रसुखोनिरंजनः पूर्णोऽद्वयोमुक्तउपाधितोऽमृतः २३ एवंविधंत्वांसक
लात्मनामपिस्वात्मानमात्मात्मतयाविचक्षते गुर्वर्कलब्धोपनिषत्सुचक्षुषा येतेतरंती
वभवाऽमृतांबुधिं २४ आत्मानमेवात्मतयाऽविजानतांतेनैवजातंनिखिलंप्रपंचितं

वातत्रातिशयाधानंपूर्णत्वेनैवनिराकृतंमलापाकरणंनिवारयतिनिरंजनइति निर्मलइत्यर्थः २३ तस्मादेवंभूतज्ञाना
न्मुच्यंतइत्याह एवंविधमिति त्वांयेविचक्षतेसम्यक्पश्यंतिकथंआत्मात्मतयाआत्माप्रत्यक्तस्यस्वरूपेणनचैतस्मु
त्रादिष्विवगौणमित्याह सकलात्मनामपिस्वात्मानंकेनगुरुरेवअर्कस्तस्माल्लब्धाउपनिषत्ज्ञानंतदेवसुचक्षुस्तेनभवए
वअमृतांबुधिः तंतरंतीव २४ अत्रचज्ञानेनतरंतीतितच्चतरंतीवेति तच्चआत्मात्मतयाज्ञानेनेत्यर्थत्रयंप्रतिज्ञातंक्रमेणो
पपाद्यते तत्रआत्मानमेवात्मतयेत्यनेनश्लोकेनज्ञानेनतरंतीत्युपपाद्यते ॥ ॥ ॥ ॥ ॥ ६ ॥ ६ ॥

भा०टी०
पू०
५४

अज्ञानसंज्ञाविति यन्नेनन तरंतीवेत्येतत् त्वामित्यादिश्लोकद्वयेनतु आत्मात्मतयैत्येतदुपपाद्यते॰ ननुज्ञानेनकथंभवंतरंती
तिभवस्यतस्याज्ञानमूलत्वादित्याह आत्मानमेवेतितेनैव अज्ञानेनैवप्रपंचितंप्रपंचः रज्ज्वामहेर्भोगभवाभवाविति सर्प
शरीरस्याध्यासापवादौयथेति २५ ननुज्ञानेनतरंतीत्येवकिमिदमुच्यतेतरंतीवेतितत्राह अज्ञानसंज्ञाविति अज्ञानेनसंज्ञाययो
तौभवबंधमोक्षौभवेनबंधस्तन्मोक्षश्चतौद्वौनामप्रसिद्धौ अन्नतद्भावात्ऋतश्चासौज्ञश्चतस्ययोभावः तस्मादन्यौनस्तः नमुक्त्यं
महान्प्रलापःक्रियते परमार्थविचारादित्याह अजस्रेति अखंडानुभवरूपेपरेशुद्धेआत्मनिअज्ञानंनचबंधः अतएवनज्ञानं
नचमोक्षः तरणौसूर्येरात्र्यहनीइवेति २६ ननुपरमार्थज्ञानादज्ञानकृतोबंधोनिवर्ततांआत्मात्मतयैवज्ञानादितिकोऽ

ज्ञानेनभूयोऽपिचतत्प्रलीयतेरज्ज्वामहेर्भोगभवाभवौयथा २५ अज्ञानसंज्ञौभवबंध
मोक्षौद्वौनामनान्यौस्तऋतज्ञभावात् अजस्रचिंत्यात्मनिकेवलेपरेविचार्य्यमाणेतर।
णाविवाहनी २६ त्वामात्मानंपरंमत्वापरमात्मानमेवच आत्मापुनर्बहिर्मृग्यअहोऽ
ज्ञजनताऽज्ञता २७ अन्तर्भवेऽनंतभवंतमेवह्यतत्त्यजंतोमृगयंतिसंतः॥ यमायहृइत्याशंक्या

हयदध्यासादात्मनःपररूपास्फूर्तिस्तदपवादेनतत्रैवआत्मस्वरूपेज्ञानंयुक्तमित्यमुमर्थंविस्मयेनाक्रोशन्निवाह त्वा
मिति त्वामात्मानंपरंदेहादिंमत्वाआत्मनिदेहादिमध्यस्यतथापरंदेहादिमात्मानंमत्वादेहादावात्मानमध्यस्यात्रनष्ट
आत्माबहिर्मृग्यइतिचित्रंनहिगृहेनष्टंवनेमृग्यतइत्यर्थः २७ विवेकिनस्तुप्रत्यक्स्वरूपेएवपरमात्मानंविचिन्वंतीत्या
ह अंतर्भवइति भवतीतिभवः चिज्जडात्मकंशरीरंतन्मध्यएवत्वांमृगयंति अतज्जडंत्यजंतः अपवदंतः ननुसतो॥ ५४
ज्ञानेनालंकिमसतोऽपवादेनेत्याशंक्य अध्यस्ताऽपवादंविनाऽधिष्ठानतत्त्वंनज्ञायतइतिसतांव्यवहारेणाह॥६॥

असंतमिति अंतिसमीपेअसंतमप्यहिमंतरेणतन्निषेधंविनेत्यर्थः संतंगुणंस्वनुसंतः किमुयंतिजानंति अंतिसंतम
पिगुणमितिवानजानंतीत्यर्थः तस्मादात्मतयैवज्ञानान्मुक्तिरितिभावः २८ नन्वेवंज्ञानैकसाध्येमोक्षेकिमितिभ।
क्तिरुद्घोषिताअतआह अथापीति यद्यपिहस्तप्राप्यमिवज्ञानमुक्तं तथापिहेदेवतवपादांबुजद्वयमध्येएकदेश।
स्यापियः प्रसादलेशोऽपितेनानुगृहीतएवभगवतस्तवमहिम्नस्तत्वंजानातिहेभगवन्नेमहिम्नस्तत्व मितिवा एकोपि
कश्चिदपिचिरमपिविचिन्वन् अपिअनदंशापवादेनविचारयन्नपीत्यर्थः २९ तत्तस्माद्भूरिभागः महद्भाग्यंअत्रभ

असंतमप्यंत्यहिमंतरेणसंतंगुणंतंकिमुयंतिसंतः २८ अथापितेदेवपदांबुजद्वयप्र।
सादलेशानुगृहीतएवहि जानातितत्वंभगवन्महिम्नोनचान्यएकोपिचिरंविचिन्वन्
२९ तदस्तुमेनाथसभूरिभागोभवेऽत्रवान्यत्रतुवातिरश्चां येनाहमेकोपिभवज्जनानां।
भूत्वानिषेवेतवपादपल्लवं ३० अहोऽतिधन्याव्रजगोरमण्यः स्तन्यामृतंपीतमतीवतेमुदा
मुदाः यासांविभोवत्सतरात्मजात्मनायत्तृप्तयेऽद्यापिनचाऽलमध्वराः ३१ ऽऽवेब्रह्मजन्मनि।

तिरश्चामपिमध्येयज्जन्मतस्मिन्वायेनभाग्येनभवदीयानांजनानांएकोपियः कश्चिदपिभूत्वानिषेवेअत्यर्थंसेवेय
इति ३० देवादिजन्मनोपियत्रकुत्रचित्वद्भक्तिमज्जन्मैवश्रेष्ठमित्यौत्सुक्येनसप्तभिःश्लोकैरभिनंदति अहोऽतिध
न्याइत्यादिभि व्रजगोरमण्यः व्रजस्यागावोरमण्यः गोप्यश्चतेत्वयावत्सतरात्मजात्मनावत्सानामात्मजानांचरूपेण।
यस्यतवतृप्तयेसर्वेपियज्ञाअद्यापिनशक्तास्तेनत्वयाप्रतिक्षणंतृप्यतायासांस्तन्यममृतरूपंपीतमिति॥ ३१ ॥ ६॥

१४
भा॰द॰
पू॰
५५

तत्रभगवत्सखानांमहिमावक्तुंज्ञातुंनशक्यतइत्याह अहोइति पुनरुक्त्याभाग्यस्यसर्वथापरिच्छिन्नत्वमुक्त
म् ३२ किंचएतेषांभाग्यस्यतावन्महिमाआस्तां कस्तंवक्तुंशक्नोति शर्वादयः शर्वोऽहंकाराधिष्ठाताआदिर्येषां
चंद्रादीनामेकादशानांतेतथावयंच॰ वयमित्यात्मानमेवबहुमन्यमान आहएवंमनोबुद्ध्यहंकारचक्षुराद्यधि
ष्ठातारस्त्रयोदशदेवाएवतावत्वत अहोभूरिभागाः यस्मादेतेषांहृषीकाणींद्रियाण्येवचषकाणिपानपात्राणितैः
सेचतुर्दशस्यचित्ताधिष्ठातुः अंघ्रीएवउदजेवारिजितयोर्मधुमकरंदः तदेवअमृतंस्वादुआसवंमादकंपिवामः

अहोभाग्यमहोभाग्यंनंदगोपव्रजौकसां यन्मित्रंपरमानंदंपूर्णंब्रह्मसनातनं।
॥ ३२ ॥ एषांतुभाग्यमहिमाच्युततावदास्तामेकादशैवहिवयंवतभूरिभागाः एत
द्धृषीकचषकैरसकृत्पिवामः शर्वादयोंघ्र्युदजमध्वमृतासवंते ३३ तद्भूरिभा
ग्यमिहजन्मकिमप्यटव्यांयद्गोकुलेऽपिकतमांघ्रिरजोभिषेकं ॥ ७ ॥ ७ ॥ ७ ॥

एतदुक्तंभवति यदाप्रत्येकंइंद्रियाभिमानिनोवयंकीर्तिसौंदर्यसौगंध्याद्येकदेशसेविनोऽपिकृतार्थाः तदासर्वैरिंद्रि
यैः सर्वसेविनामेतेषांकिंवर्ण्यतेभाग्यमिति ३३ अतोमयाप्रार्थितंतदस्तुमेनाथसभूरिभागइतियत्तदेतदेवेत्याह
तद्भूरिभाग्यमिति किंतत्इहमनुष्यलोकेयत्किमपि॰ जन्मतत्रापिअटव्यांयत् तत्रापिगोकुलेयत् अहोस
त्यलोकंविहायात्रजन्मनिजातेकोलाभः अतआह अपिकतमांघ्रिरजोभिषेकमिति गोकुलवासिनांमध्ये
॥ अपिकतमस्ययस्यकस्याप्यंघ्रिरजसाऽभिषेकोयस्मिन्तत् ॥

एम
५५

ननुकुतोगोकुलवासिनएव अतिधन्यास्तत्राह यदिति येषांजीवितंनिखिलंभगवान्मुकुंदः मुकुंदपर
मेवजीवनमित्यर्थः दुर्लभतामाह अद्यापीति श्रुतिमृग्यंवेदैरपिमृग्यतएवनतुदृश्यतइत्यर्थः ३४ अपिच
किंवर्ण्यतेकृतार्थत्वमेतेषांयेषांभक्त्याभवानपिऋणीवास्ते ननुकिंदातुमसमर्थोहंयेनऋणीस्यांअतआह उ
तअपिभवानपि एषांकुत्रापिकिंविश्वफलात्सर्वफलात्मकत्वात्त्वत्तः परंफलंरंगतादास्यतीतिनश्चेतः अ
यत्सर्वत्रगच्छत्विचारयन्मुह्यति ननुमामेवदत्वाअनृणः स्यामितिचे न्नहिनहिसद्वेषादिवसतांभक्तानांयो

यज्जीवितंतुनिखिलंभगवान्मुकुंदस्त्वद्यापियत्पदरजःश्रुतिमृग्यमेव ३४ एषांघो
षनिवासिनामुतभवान्किंदेवरातेतिनश्चेतोविश्वफलात्फलंत्वदपरंकुत्राप्ययन्मुह्य
तिसद्वेषादिवपूतनाऽपिसकुलात्वामेवदेवाऽपितायद्धामार्थसुहृत्प्रियात्मतनयप्राणा
शयास्त्वत्कृते ३५ तावद्रागादयस्तेनास्तावत्कारागृहंगृहं तावन्मोहोऽंघ्रिनिगडोयावत्कृ

वेषस्तदनुकरणमात्रेणपापिष्ठापूतनापित्वामेवापिताप्रापिता· तर्हितत्संबंधिनाम ष्णनतेजनाः ३६ ॥
पिदास्यामीतिचेत्तत्राह सकुलेति वकाघासुरसहिता एषामपितावदेवचेदपर्याप्तमित्याह यदिति येषांधामादयःत्वत्कृतेत्व=
दर्थमेवेत्यर्थः ३५ ननुवीतरागादिदोषाणांसंन्यासिनामपिनमत्तःपरंकिंचिदस्तिकथमेषामपर्याप्तंइत्यतआह तावदि
ति· हेकृष्णरागादयस्तावदेवस्तेनाश्चौराभवंतितथातावद्गृहमपिकारागृहंबंधनागारं मोहोऽपितावदेवांघ्रिनिगडःपादशृं
खलायावत्तेत्वदीयाजनानभवंतित्वदीयानांतुरागादयोऽपित्वन्निष्ठामोचकाएवेतिनयतिभ्योविशेषःभजनंत्वधिकमिति

नन्वतएवाहमेषांपुत्रादिरूपेणवर्त्ते इति चेत्तत्राह प्रपंचमिति प्रपन्नायाजनताजनसमूहस्तस्या आनंदानांसंदोहं
समूहंप्रथयितुमिति नहिकपटपुत्रत्वादिनाताद्दृक्भक्तेरानृण्यंसंपद्यतइत्यर्थः ३७ तदेवमादित आरभ्याचिंत्या
नंतगुणत्वेनस्वयंदुर्ज्ञेयत्वमुक्तं केचित्तुजानीमइतिस्थिताः तानुपहसन्निवाह जानंतइति· ननुमेमनआदीनांत
ववैभवंविषयइति ३८ जगदीशत्वाद्यभिमानंपरित्यज्याह अनुजानीहीति हेकृष्णमामनुजानीहिसत्यलोकंगंतुम
नुज्ञांदेहि स्वमहिमानंअस्मदादीनांचज्ञानबलादिसर्वंत्वमेववेत्सियतः सर्वदृक् जगतांनाथस्तुत्वमेवेत्येतावतज्ज्ञानं

प्रपंचंनिष्प्रपंचोऽपिविडंबयसिभूतले प्रपन्नजनतानंदसंदोहंप्रथितुंप्रभो ३७ जानं
तएवजानंतुकिंबहूक्त्यानमेप्रभो· मनसोवपुषोवाचोवैभवंतवगोचरः ३८ अनुजा।
नीहिमांकृष्णसर्वंत्वंवेत्सिसर्वदृक्· त्वमेवजगतांनाथोजगदेतत्तवार्पितं ३९ श्रीकृ।
ष्णवृष्णिकुलपुष्करजोषदायिन् क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् उद्धर्मशार्वर
हरक्षितिराक्षसध्रुगाकल्पमार्कमर्हन्भगवन्नमस्ते ४० ॥ऽऽ अतोममनास्यदंशगतएततश
रीरंचतवार्पितं ३९ तदेवंकिंकरंप्रस्थापयेति अत्यादरेणनमस्करोति श्रीकृष्णेति वृष्णिकुलपद्मस्यप्रीतिदा
तृत्वेनहेसूर्योपम क्ष्माचअवनिः निर्जरादेवाश्चद्विजाश्चपशवश्चतएवउदधयस्तेषांवृद्धिकारित्वेनहेचंद्रोपम उ
द्धर्मः पाखंडधर्मः तदेवशार्वरंतमःतद्धरतीतितथाअनेनवह्न्युपम हेक्षितिराक्षसध्रुक् क्षितौराक्षसाःकंसादयःउद्यन्त्ये
वतेभ्योद्रुह्यतीतिपुनःसूर्योपम सूर्याद्युपमापिन्यूनेतिमत्वाह आऽर्कमर्कमभिव्याप्यसर्वेषांअर्हन्पूज्यभगवन्आक

समस्तवत्सकमोक्षणकौतुकदुतविलंबितपुत्रमुदेद्भुतं निखिलरूपमतोदधदच्युतोऽवतुसवः कलयनव्रजमंगलं १ पादयोर्नत्वाऽभीष्टं सर्वतः पूजितंऽभिप्रेतंवा ४१ अनुज्ञाप्य अनुज्ञांप्रदाप्य पृष्ट्वेत्यर्थः स्वभुवंब्रह्माणंयथापूर्वंसखायोयस्मिन् तत्सखकंपुलिनं ४२ नन्वेतावंतंकालंकथंतेतत्रैवोपविष्टाः कथंचक्षुत्पिपासादिविस्मरणमतआह एकस्मिन्निति।

श्रीशुकउवाच इत्यभिष्टूयभूमानंत्रिःपरिक्रम्यपादयोः नत्वाऽभीष्टंजगद्धातास्वंधाम प्रत्यपद्यत ४१ ततोऽनुज्ञाप्यभगवान्स्वभुवंप्रागवस्थितान् वत्सान्पुलिनमानिन्येयथापूर्वसखिस्वकं ४२ एकस्मिन्नपिपातेऽब्देप्राणेशंचांतरात्मनः कृष्णमायाहताराजन्क्षणार्द्धंमेनिरेऽर्भकाः ४३ किंकिंनविस्मरंतीहमायामोहितचेतसः यन्मोहितंजगत्सर्वमभीक्ष्णंविस्मृतात्मकं ४४ ऊचुश्चसुहृदःकृष्णंस्वागतंतेतिरंहसा नैकोऽप्यभोजिकवलएहीतःसाधुभुज्यतां ४५ ततोहसन्हृषीकेशोऽभ्यवहृत्यसहार्भकैः दर्शयन्चर्माजगरंन्यवर्ततवनाद्व्रजं ४६ ॥ श्लोकद्वयेन अब्देपियातेप्राणेशंकृष्णंमंतराचविनाऽपिप्रियविरहेक्षणोऽपिवर्षाधिकोभवतितथापिमायाहताः क्षणार्द्धंमेनिरे ४३ यतय्यामायथामोहितंजगत् अभीक्ष्णंपुनःपुनर्विस्मृतात्मकंविस्मृतः आत्मैवयेननत्तथा ४४ अतएवमूचुश्च तेत्वयाऽतिवेगेनस्वागतंएकोपियासस्त्वांविनाऽस्माभिर्नाभोजिनभुक्तः इतएहिसाधुअविक्षेपेणभुज्यतामिति ४५ अभ्यवहृत्यभुक्त्वा ४६ ॥ ७ ॥ ७ ॥ ७ ॥

प्रोद्दामो योवेणवादिः तस्य रवैरुत्सवस्तेनाढ्यः संपन्नः गृणन् उपलालनैराह्वयन् गोपीदृशामुत्सवरूपा दृशिर्दर्शनं यस्य सः ४७ यशोदानंदसूनुनेति बहूनामुक्तिः सहैवदर्शितायद्वा केचिदाहुः यशोदासूनुनाअपरे नंदसूनुनेति यद्वायशोदानंदयतीति यशोदानंदः सचासौ सूनुश्चेति तथातेन अस्मान्महाव्यालात् वयंच अविताः रक्षिताः ४८ व्रजौकसां स्वतो

बर्हप्रसूनवनधातुविचित्रितांगः प्रोद्दामवेणुदलशृंगरवोत्सवाढ्यः वत्सान्गृणन्ननुगगीतपवित्रकीर्तिर्गोपीदृगुत्सवदृशिः प्रविवेशगोष्ठं ४७ अद्यानेन महाव्यालो यशोदानंदसूनुना हतोऽविता वयंचास्मादिति वाला व्रजेजगुः ४८ राजोवाच ब्रह्मन्परोद्भवे कृष्णे इयान्प्रेमा कथंभवेत् योऽभूतपूर्वस्तोकेषु स्वोद्भवेष्वपि कथ्यतां ४९ शुकउवाच सर्वेषामपि भूतानां नृप स्वात्मैव वल्लभः इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि ५० तद्राजेंद्र यथा स्नेहः स्वस्वकात्मनि देहिनां न तथा ममतालंबि पुत्रवित्तगृहादिषु ५१ देहात्मवादिनां पुंसामपि राजन्यसत्तम ॥ केषु स्नेहवत्स्याऽब्दमन्वहं शनैर्निःसीमवद्वधे यथाकृष्णे त्वपूर्ववत् इत्यादिना स्वतोकेभ्योपि परपुत्रे कृष्णे प्रेमाधिक्यमुक्तं तत्र पृच्छति ब्रह्मन्निति ४९ श्रीकृष्णस्य साक्षादात्मत्वात्तस्मिन्नात्मीयेभ्यः प्रेमाधिक्यं युज्यत इति वक्तुं प्रथमं तावदात्मनः स्वतः प्रेष्ठत्वमन्येषां तु तदुपाधिकमिति दर्शयति पंचभिः सर्वेषामिति ५० कुतः तथादर्शनादित्याह तदिति तस्मादेव कारणात् स्वस्वकात्मनि अहंकारास्पदेपि देहे ५१ आत्माध्यासतारतम्येन प्रे

तन्निबंधनमेवेतिदर्शयितुंमूढामूढभेदेनविशेषमाहदेहात्मवादिनामितिद्वाभ्यां तंदेहमनुभवंतियेपुत्रादयस्तेतुनत
थाप्रियतमाइत्यर्थः ५२ यत् यस्मात्जीर्य्यत्यपिआसन्नमरणेऽपिजीविताशाभवतिअयंभावः नजीविष्यतीतिनिश्चितेऽ
पिदेहेयत्नेमास्पदत्वंतदात्मगतमेवसंगच्छतइति अथवायत् यस्मिन्देहेजीर्यत्यपिजीविताशाअविवेकदशायामा
सीत्साऽपिविवेकिनोयदाममताभाग्भवतितदाआत्मवत्प्रियोनभवतिअतस्तत्रनातीवास्थेति ५३ तदर्थमेवसकलं
प्रियमित्यर्थः ५४ प्रस्तुतमाह कृष्णमेनमिति ५५ नकेवलमात्मनामात्मा अपितुजडानामपीत्याह वस्तुतइति सर्वंज

यथादेहः प्रियतमस्तथानह्यनुयेचतम् ५२ देहोऽपिममताभाक्चेत्तर्ह्यसौनात्मवत्प्रि
यः यज्जीर्य्यत्यपिदेहेऽस्मिन्जीविताशाबलीयसी ५३ तस्मात्प्रियतमः स्वात्मासर्वे
षामपिदेहिनां तदर्थमेवसकलंजगच्चैतच्चराचरं ५४ कृष्णमेनमवेहित्वमात्मानमखि
लात्मनां जगद्धितायसोऽप्यत्रदेहीवाभातिमायया ५५ वस्तुतोजानतामत्रकृष्णंस्था
स्नुचरिष्णुच भगवद्रूपमखिलंनान्यद्वस्त्विहकिंचन ५६ सर्वेषामपिवस्तूनांभावार्थोभ
वतिस्थितः तस्यापिभगवान्कृष्णः किमतद्वस्तुरूप्यतां ५७ ॥

गत्कारणमितिकृष्णंजानतांपुं
सांस्थावरंजंगमंच सर्वंभगवद्रूपंभगवानेवस्वरूपंयस्यतत्रान्यत् ५६ कुतइतितदाह सर्वेषामिति भावार्थः परमार्थः
भवतिभवत्परिणामंप्राप्नुवत्कारणंतस्मिन् तस्यापिभवतः कारणस्यापिभगवान् कृष्णएवकारणं अतः किमेतत्
श्रीकृष्णव्यतिरिक्तंवस्तुरूप्यतां तस्माच्छ्रीकृष्णस्यैवपरमार्थत्वात्तदेकशरणानामयत्नसिद्धोमोक्षइति ५७ ॥ १ ॥ १ ॥

प्रकरणार्थमुपसंहरति समाश्रिताइति पुण्यंयशोयस्यसपुण्ययशाः सचासौमुरारिश्चतस्यपदपल्लवएवप्लवस्तंयेसम्यगा
श्रिताः महत्पदंमहतांपदमाश्रयं यद्वामहच्चतत्पदंचेति तथातेषांभवांबुधिर्वत्सपदमात्रंभवतिकिंचपरंपदं श्रीवैकुंठ
ख्यंपदंस्थानंभवतिविपदांयत्पदंविषयः तत्पुनःकदाचिदपितेषांनभवतिनततःपुनरावर्ततइत्यर्थः ५८ ५९ सुहृद्भिश्चरि
तंसुसंताऽन्योन्यशिक्यादीनित्यादिनोक्तं अघार्दनंचशाद्वलजेमनंभोजनंच व्यक्तेतरस्यव्यक्तान्नडमपंचादितरत्शुद्धसत्वात्म

समाश्रितायेपदपल्लवप्लवंमहत्पदंपुण्ययशोमुरारेः भवांबुधिर्वत्सपदंपरंपदंपदंपदंयद्वि
पदांननेषां ५८ एतत्तेसर्वमाख्यातंयत्पृष्टोऽहमिहत्वया यत्कौमारेहरिकृतंपौगंडेपरिकीर्ति
तं ५९ एतत्सुहृद्भिश्चरितंमुरारेरघार्दनंशाद्वलजेमनंच व्यक्तेतरद्रूपमजोर्वभिष्टवंशृण्व
न्गृणन्नेतिनरोऽखिलार्थान् ६० एवंविहारैःकौमारैःकौमारंजहतुर्व्रजे निलायनैःसेतुबंधैर्मर्क
टोत्प्लवनादिभिः ६१ इतिश्रीभागवतेमहापुराणेदशमस्कंधेब्रह्मस्तुतिर्नामचतुर्दशो
ऽध्यायः १४ श्रीशुकउवाच ततश्चपौगंडवयःश्रितौव्रजेबभूवतुस्तौपशुपालसंमतौ ।

कंवत्सवत्सपालरूपं यद्वाव्यक्तेतरःचिद्विलासःतद्रूपतरइतिरूपंअजस्यऊर्वमहानभिष्टवस्तवस्तंब्रह्मकृतांस्तुतिएतत्शृण्वन्गृ
णन्नरःसर्वपुरुषार्थान्प्राप्नोति ६० ६१ इतिश्रीपरमानंदनृसिंहपदषट्पदः व्याकरोतिश्रीधरस्वामीयथामतिविधिस्तुतिम् ३
तिदशमेचतुर्दशः १४ ततःपंचदशेधेनुपालनंधेनुकार्दनं कालियक्ष्वेडतोगोपरक्षणंचनिरूप्यते १ अहिवक्त्रप्रवेशे
नदृष्टाखिलान् सखीनतः हृत्स्मःप्रावेशयत्यक्तफलंतालालिकाननं २ पशुपालसंमतौपशुपालनेसंमतौपशुपालानां

वासंमतोर्ईषद्दयोर्बलातिरेकमनुकुर्वंतावित्यर्थः अतीवचक्रतुः सर्वतःप्रसर्प्पणेन १ स्वयशोगृणद्भिर्गोपैर्वृतस्तद्वनं॥
प्राविशत् २ तद्वनंनिरीक्ष्यरंतुंमनोदधेकथंभूतंमंजुघोषाये अलिमृगद्विजाः भ्रमरमृगपक्षिणः तैराकुलंव्याप्तंमहन्मनः
स्वच्छपयःसरस्वतामहतांमनसातुल्यंस्वच्छंपयोयस्मिन्तत्सर आश्रयत्वेनास्तियस्यतेनवातेनेतिशैत्यमुक्तं शतपत्रगं

गाश्चारयंतौसखिभिः समंपदैर्वृंदावनंपुण्यमतीवचक्रतुः १ तन्माधवोवेणुमुदीरयन्
वृतोगोपैर्गृणद्भिः स्वयशोबलान्वितः पशून्पुरस्कृत्यपशव्यमाविशत् विहर्तुकामःकुसुमा
करंवनं २ तन्मंजुघोषालिमृगद्विजाकुलंमहन्मनःस्वच्छपयःसरस्वता वातेनजुष्टंशतप
त्रगंधिनानिरीक्ष्यरंतुंभगवान्मनोदधे ३ सतत्रतत्रारुणपल्लवश्रियाफलप्रसूनोरुभ
रेणपादयोः स्पृशच्छिखान्वीक्ष्यवनस्पतीन्मुदास्मयन्निवाहाऽग्रजमादिपुरुषः ४ श्री
भगवानुवाच अहोअमीदेववराऽमरार्चितंपादांबुजंतेसुमनःफलार्हणं नमंत्युपादा
यशिखाभिरात्मनस्तमोपहत्यैतरुजन्मयत्कृतं ५ एतेऽलिनस्तवयशोऽखिललोकतीर्थं
धिनेतिपरिमलवत्वं जुष्टंवनमितिमाद्यंसूचितं ३ अरुणपल्लवश्रियासहस्पृशंत्यः ऽऽ गायंतआदिपुरुषानुपदंभजंते
शिखाःशाखाग्राणियेषांतान् ४ तरुजन्मयेनकृतंतस्यतमसः पापस्यअपहत्यैनाशायअथवायेनत्वयाईश्वरेणसर्वोपकार
कंतरुजन्मकृतंतंत्वांनमंति एवंश्लाघ्यमपिजन्मनियदज्ञानरूपंतमोस्तितस्यापहत्यै ५ हेअनघ वनेगूढमपित्वांनत्यजंति ॥६॥

१५
भा॰द॰
पू॰
५९

त्वयिमनुष्यवेषेणनिगूढेसतिमुनयोप्यऽलिवेषेणनिगूढास्त्वांभजंतीत्यर्थः ६ इयान्हिसतांनिसर्गइतियदस्तिस्वस्मिन्तत्र गृ
हमागतायमहतेमहत्पुरुषायसमर्पयंतीति ७ तृणवीरुद्भ्यस्त्वत्पादौस्पृशंतीतितथाकरजाभिमृष्टाः नखैःस्पृष्टाःसदयैरवलो
कनैः श्रीरपियस्मैस्पृहयतिकेवलंतेनभुजयोरंतरेणवक्षसागोप्योधन्याइति ८ एवंश्रीमत् वृंदावनंप्रतिप्रीतः सन् अद्रेःसमी

प्रायोअमीमुनिगणाभवदीयमुख्यागूढंवनेपिनजहत्यनघात्मदैवं ६ नृत्यंत्यमी
शिखिनईड्यमुदाहरिण्यःकुर्वंतिगोप्यइववनेप्रियमीक्षणेन सूक्तैश्चकोकिलगणागृ
हमागतायधन्यावनौकसइयान्हिसतांनिसर्गः ७ धन्येयमद्यधरणीतृणवीरुधस्त्वत्पा
दस्पृशोद्रुमलताःकरजाभिमृष्टाः नद्योऽद्रयःखगमृगाःसदयावलोकैर्गोप्योंतरेणभुजयो
रपियत्स्पृहाश्रीः ८ श्रीशुकउवाच एवंवृंदावनंश्रीमत्कृष्णःप्रीतमनाःपशून् रेमेसंचा
रयन्नद्रेःसरिद्रोधःसुसानुगः ९ क्वचिद्गायतिगायत्सुमदांधालिष्वनुव्रतैः उपगीयमा
नचरितःस्रग्वीसंकर्षणान्वितः १० क्वचिच्चकलहंसानामनुकूजतिकूजितं अभिनृत्यति
नृत्यंतंबर्हिणंहासयन्क्वचित् ११ मेघगंभीरयावाचानामभिर्दूरगान्पशून् क्वचिदाह्वयति

पर्वतसरित्तटेषुपशून्संचारयन् सानुगःगोपैःसहवर्त्तमानःप्रीतमनारेमे ९ तामेव ॥ प्रीत्यागोगोपालमनोज्ञया १२
रतिमाहदशभिःक्वचिदित्यादि १० बर्हिणंनृत्यंतमनुअभिनृत्यतिबर्हिणंअभिमुखोनृत्यतीतिवा सखीन्हासयन् ११।१२।

सम
५९

चकोरादीननुकरोतीति कदाचिच्च सत्वानां मध्ये व्याघ्रसिंहयोस्ताभ्यां भीतवद्भवति· सत्वेषु पलायमानेषु पलायत इत्यर्थः तयोः
सत्वानां बलोद्रेकाणां भीतवद्भवतीति वा १३ आर्य्यं अग्रजं विश्रमयति विगतश्रमं करोति १४ मिथो नृत्यादीन् कुर्वतो गोपान् प्रशशं

चकोरक्रौंचचक्राह्वभारद्वाजांश्च बर्हिणः अनुरौति स्म सत्वानां भीतवद्व्याघ्रसिंहयोः
१३ क्वचित्क्रीडापरिश्रांतं गोपोत्संगोपबर्हणं स्वयं विश्रमयत्यार्य्यं पादसंवाहनादिभिः
१४ नृत्यतो गायतः क्वापि वल्गतो युध्यतो मिथः गृहीतहस्तौ गोपालान् हसंतौ प्रशशंसतुः
१५ क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्शितः वृक्षमूलाश्रयः शेते गोपोत्संगोपबर्हणः १६
पादसंवाहनं चक्रुः केचित्तस्य महात्मनः अपरे हतपाप्मानो व्यजनैः समवीजयन् १७
अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः गायंति स्म महाराज स्नेहक्लिन्नधियः शनैः १८
एवं निगूढात्मगतिः स्वमायया गोपात्मजत्वं चरितैर्विडंबयन् रेमे रमालालितपादपल्ल
वो ग्राम्यैः समं ग्राम्यवदीशचेष्टितः १९ श्रीदामा नाम गोपालो रामकेशवयोः सखा सु
बलस्तोककृष्णाद्या गोपाः प्रेम्णेदमब्रुवन् २० राम राम महाबाहो कृष्ण दुष्टनिबर्हण

सतुः १५।१६ व्यजनैः पल्लवादिनिर्मितैः १७ ईशचेष्टित इति निगूढस्वभावत्वेपि अंतरांतरा ईशस्यैव चेष्टितानि दृश्यंते
यस्मिन्सः १९ ईशचेष्टितत्वमेव दर्शयितुमाह श्रीदामेति स्तोककृष्णः कश्चित् २० तालालिसंकुलं ॥ ६ ॥ ७ ॥ ७ ॥

२५
भा०द०
पू०
९०

तालानांपंक्तिभिर्व्याप्तं २१ २२ २३ २४ विषूचीनः सर्वतः प्रसृतः २५ २६ २७ २८ सनगंसवृक्षं २९ प्रत्यक्द्वाभ्यांपश्चिमाभ्यां

इतोविदूरेसुमहद्वनंतालालिसंकुलं २१ फलानितत्रभूरीणिपतंतिपतितानिच संतिकिं
त्ववरुद्धानिधेनुकेनदुरात्मना २२ सोऽतिवीर्योऽसुरोरामहेकृष्णखररूपधृक् आत्मतु
ल्यबलैरन्यैर्ज्ञातिभिर्बहुभिर्वृतः २३ तस्मात्कृतनराहाराद्भीतैर्नृभिरमित्रहन् नसेव्य
तेपशुगणैः पक्षिसंघैर्विवर्जितं २४ विद्यंतेऽभुक्तपूर्वाणिफलानिसुरभीणिच एषवैसु
रभिर्गंधोविषूचीनोऽवगृह्यते २५ प्रयच्छतानिनःकृष्णगंधलोभितचेतसां वांछास्तिम
हतीरामगम्यतांयदिरोचते २६ एवंसुहृद्वचः श्रुत्वासुहृत्प्रियचिकीर्षया प्रहस्यजग्मतुर्गो
पैर्वृतौतालवनंप्रभू २७ बलः प्रविश्यबाहुभ्यांतालान्संपरिकंपयन् फलानिपातयामा
समतंगजइवौजसा २८ फलानांपततांशब्दंनिशम्यासुररासभः अभ्यधावत्क्षितित
लंसनगंपरिकंपयन् २९ समेत्यतरसाप्रत्यक्द्वाभ्यांपद्भ्यांबलंबली निहत्योरसिकाश
ब्दंमुंचन्पर्यसरत्खलः ३० पुनरासाद्यसंरब्धउपक्रोष्टापराक्स्थितः चरणावपरौराज

द्वाभ्यांकाशब्दमितिगर्दभजातिशब्दानुकरणंपर्य्यसरत् परितोऽधावतइत्यर्थः ३० उ [illegible] न्बलायप्राक्षिपद्रुषा ३१

॥ पक्रोष्टागर्दभःपराक्प्रतिमुखः अपरौपश्चिमौबलायबलंहंतुं॥ ३१॥

तृणराजस्तालः ३२ ३३ उत्सृष्टेनखरदेहेनहतैराहताः चकंपिरेऽकंपंत· ३४ यस्मिन्निदंविश्वमोतंऊर्द्ध्वंतंतुषुपटइवग्रथितंप्रोतं तिर्यक्तंतुषुपटवदेवसंग्रथितंसर्वतोऽनुस्यूतंवर्ततइत्यर्थः ३५ ३६ ३७ घनैर्नभस्तलमिवभूःरराज तत्रफलप्रकरसंकीर्णेतिदैत्य

सतंगृहीत्वाप्रपदोर्भ्रामयित्वैकपाणिना चिक्षेपतृणराजाग्रेभ्रामणत्यक्तजीवितं ३२ तेना हतोमहातालोवेपमानोवृहच्छिराः पार्श्वस्थंकंपयन्भग्नःसचान्यंसोपिचापरं ३३ वल स्यलीलयोत्सृष्टखरदेहहताहताः तालाश्चकंपिरेसर्वेमहावातेरिताइव ३४ नैतच्चित्रं भगवतिह्यनंतेजगदीश्वरे ओतप्रोतमिदंयस्मिन्तंतुष्वंगयथापटः ३५ ततःकृष्णं चरामंचज्ञातयोधेनुकस्यये क्रोष्टारोऽभ्यद्रवन्सर्वेसंरब्धाहतवांधवाः ३६ तांस्ताना पततःकृष्णोरामश्चनृपलीलया गृहीतपश्चाच्चरणान्प्राहिणोत्तृणराजसु ३७ फलप्र करसंकीर्णंदैत्यदेहैर्गतासुभिः रराजभूःसतालाग्रैर्घनैरिवनभस्तलं ३८ तयोस्तत्सु महत्कर्मनिशाम्यविवुधादयः मुमुचुःपुष्पवर्षाणिचक्रुर्वाद्यानितुष्टुवुः ३९ अथ तालफलान्यादन्मनुष्यागतसाध्वसाः तृणंचपशवश्चेरुर्हतधेनुककानने ४० ॥

देहैः फलतालाग्रैश्चसंकीर्णाइत्यरुणश्वेतनीलघनसादृश्यसंपादनं ३८ ॥ ३९ ॥ आदन्भक्षयन् ४० ॥ ७॥ ७॥

११
भा॰ द॰
पू॰
ह॰

॥ ४१ ॥ गोरजोभिः छुरितेषु कुंतलेषु बद्धं बर्हं वन्यानि प्रसूनानि च यस्य रुचिरमीक्षणं चारुहासश्च यस्य तं च तं च दिदृक्षितं द
शः दिदृक्षिता दर्शनोत्कंठायुक्ता दृशो यासां ताः ४२ मुकुंदस्य मुखपद्मगतं सारघं मधु अन्हियो विरहस्तस्माज्जातं तापं स च

कृष्णः कमलपत्राक्षः पुण्यश्रवणकीर्तनः स्तूयमानोऽनुगैर्गोपैः साग्रजो व्रजमाव्रजत्
४१ तं गोरजश्छुरितकुंतलबद्धबर्हवन्यप्रसूनरुचिरेक्षणचारुहासं वेणुं क्वणंतमनुगैरनु
गीतकीर्तिं गोप्यो दिदृक्षितदृशोऽभ्यगमन्समेताः ४२ पीत्वा मुकुंदमुखसारघमक्षिभृंगैस्ता
पं जहुर्विरहजं व्रजयोषितोऽह्नि तत्सत्कृतिं समधिगम्य विवेश गोष्ठं सव्रीडहासविनयं यदप
पांगमोक्षं ४३ तयोर्यशोदारोहिण्यौ पुत्रयोः पुत्रवत्सले यथाकामं यथाकालं व्यधत्तां
परमाशिषः ४४ गताध्वानश्रमौ तत्र मज्जनोन्मर्दनादिभिः नीवीं वसित्वा रुचिरां दिव्यस्र
ग्गंधमंडितौ ४५ जनन्युपहृतं प्राश्य स्वाद्वन्नमुपलालितौ संविश्य वरशय्यायां सुखं सुषु
पतुर्व्रजे ४६ एवं स भगवान्कृष्णो वृंदावनचरः क्वचित् ययौ राममृते राजन्कालिंदीं स
खिभिर्वृतः ४७ अथ गावश्च गोपाश्च निदाघातपपीडिताः दुष्टं जलं पपुस्तस्यास्तृषार्ता विष
तासां सत्कृतिं पूजाकां सत्कृतिं कथं वा कृतां तां ताम् आह सव्रीडेति सव्रीडेन सलज्जेन हासेन विनयो य ऽऽ दूषितं ४८
था भवति तथा यदेतत् किं तत् अपांगमोक्षं कटाक्षदर्शनं तथा तां सत्कृतिं प्राप्येति ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥

राम
६१

४८।५० संप्रतिसद्यस्वद्गताप्राप्तास्मृतिर्यैस्तेसंप्रतीतस्मृतयः यद्वासम्यक्प्रतीताप्रतिप्राप्तास्मृतिर्यैस्तेतथाइति ५१ ५२ इति
दशमेपंचदशोध्यायः १५ षोडशेकालियस्योक्तोनिग्रहोयमुनाहृदे तत्पत्नीभिःस्तुतेनाथकृष्णेनानुग्रहःकृतः १ हत्वारासे

विषांभस्तदुपस्पृश्यदैवोपहतचेतसः निपेतुर्व्यसवः सर्वेसलिलांतेकुरूद्वह ४९ वी
क्ष्यतान्वैतथाभूतान्कृष्णोयोगेश्वरेश्वरः ईक्षयामृतवर्षिण्यास्वनाथान्समजीव
यत् ५० तेसंप्रतीतस्मृतयः समुत्थायजलांतिकात् आसन्सुविस्मिताः सर्वेवीक्षमाणाः
परस्परं ५१ अन्वमंसतत्द्राजन्गोविंदानुग्रहेक्षितं पीत्वाविषंपरेतस्यपुनरुत्थानमात्म
नः ५२ इतिश्रीभागवतेमहापुराणेदशमस्कंधेधेनुकवधोनामपंचदशोध्यायः १५ श्री
शुकउवाच विलोक्यदूषितांकृष्णांकृष्णः कृष्णाहिनाविभुः तस्याविशुद्धिमन्विच्छन्
सर्पंतमुदवासयत् १ राजोवाच कथमंतर्जलेऽगाधेन्यगृह्णाद्भगवानहिं सवैबहुयुगा
वासंयथासीद्विप्रकथ्यतां २ ब्रह्मन्भगवतस्तस्यभूम्नः स्वच्छंदवर्तिनः गोपालोदार
चरितंकस्तृप्येतामृतंजुषन् ३ श्रीशुकउवाच ॥ भद्रेतेयान्जग्ध्वातालफलान्यलं प्रीतोऽनृत्य
त्फणारंगेकालियस्यकलानिधिः २ उदवासयत्निःसारितवान् १ बहूनियुगान्यावासोयस्यतमहिं सवैअहिः अज
लचरोऽपितस्मिन्नंतर्जलेयथायेनप्रकारेणासीत् अथवाबहूनियुगान्यावासोयथाभवतितथातेनप्रकारेणसवैतत्रासीदिति

१५ भा॰ द॰ पू॰ ६२

श्रप्यमाणंपच्यमानंपयोयस्यसः अतउपरिगच्छंतःखगायस्मिन्पतंति ४ किंचविप्रुष्मताअंबुकणयुक्तेनविषोदकतरंगस्य
र्मिमारुतेनस्पृष्टायस्यतीरगाम्रियंतेसह्रदआसीदिति ५ तंकालियंचंडोवेगोयस्यतद्विषमेववीर्य्यंयस्यतं कदंबमिति भाविना
श्रीकृष्णस्यचरणस्पर्शभाग्येनसएकस्तीरेनशुष्कः अथवाअमृतमाहरतागरुत्मताक्रांतत्वादितिचपुराणांतरं आस्फो॥

कालिंद्यांकालियस्यासीद्ध्रदःकश्चिद्विषाग्निना श्रप्यमाणपयायस्मिन्पतंत्युपरिगाःखगाः
४ विप्रुष्मताविषोदोर्मिमारुतेनाभिमर्शिताः म्रियंतेतीरगायस्यप्राणिनःस्थिरजंगमाः
५ तंचंडवेगविषवीर्य्यमवेक्ष्यतेनदुष्टांनदींचखलसंयमनावतारः कृष्णःकदंबमधिरुह्य
ततोऽतितुंगादास्फोट्यगाढरशनोन्यपतद्विषोदे ६ सर्प्पह्रदःपुरुषसारनिपातवेगसंक्षो
भितोरगविषोच्छ्वसितांबुराशिः पर्य्यक्प्लुतोविषकषायविभीषणोर्म्मिर्धावन्धनुःशत
मनंतबलस्यकिंतत् ७ तस्यह्रदेविहरतोभुजदंडघूर्णवार्घोषमंगवरवारणविक्रमस्य।
आश्रुत्यतत्स्वसदनाभिभवंनिरीक्ष्यचक्षुःश्रवाःसमसरत्तदमृष्यमाणः॥ ८ ॥ ९ ॥

दृढ्वाहुंकरतलेनाहत्य गाढादृढावद्धारशनाकटिबंधवस्त्रंयेनसः ६ तदासर्प्पस्यह्रदःपुरुषश्रेष्ठस्यपतनभारेणसं
क्षोभितानामुरगाणांविषैरुत्कटोंऽबुराशिर्यस्यसः विषेणकषायीकृताभयंकराऊर्म्मयोयस्यसः पर्यक्परितःधनुःशतं
प्लुतःप्रसृतः नैतच्चित्रमित्याह अनंतबलस्येति ७ ह्रदेविहरतःभुजदंडाहतोदकघोषंश्रुत्वाततःस्वसदनाभिभवंनिरीक्ष्यत ६२

प्रेक्षणीयश्चसुकुमारश्चघनवदुज्वलश्चतंश्रीवत्सपीतवसनंश्रीवत्सेनसंयुक्तमुच्चलत्पीतंवस्त्रंयस्यतं भुजयाभोगेनच
छादयन्त्रवेष्टयत ९ सप्रियोयेषांतेतत्प्रियास्तेचतेसखायश्चेतितथा १० ११ भुविभूकंपादयः दिविउल्कापातादयः आत्म

तंप्रेक्षणीयसुकुमारघनावदातंश्रीवत्सपीतवसनंस्मितसुंदरास्यं क्रीडंतमप्रतिभयंक
मलोदरांघ्रिंसंदश्यमर्मसुरुषाभुजयाचछाद ९ तंनागभोगपरिवीतमदृष्टचेष्टमालो
क्यतत्प्रियसखाः पशुपाभृशार्त्ताः कृष्णेऽर्पितात्मसुहृदर्थकलत्रकामादुःखानुशोकभ
यमूढधियोनिपेतुः १० गावोवृषावत्सतर्य्यः क्रंदमानाःसुदुःखिताः कृष्णेन्यस्तेक्षणा
भीतारुदंत्यइवतस्थिरे ११ अथव्रजेमहोत्पातास्त्रिविधाह्यतिदारुणाः उत्पेतुर्भुविदि
व्यात्मन्यासन्नभयशंसिनः १२ तानालक्ष्यभयोद्विग्नागोपानंदपुरोगमाः विनारामे
णगाःकृष्णंज्ञात्वाचारयितुंगतं १३ तैर्दुर्निमित्तैर्निधनंमत्वाप्राप्तमतद्विदः तत्प्राणा
स्तन्मनस्कास्तेदुःखशोकभयातुराः १४ आबालवृद्धवनिताः सर्वेपशुवृत्तयः निर्जग्मु
र्गोकुलाद्दीनाः कृष्णदर्शनलालसाः १५ तांस्तथाकातरान्वीक्ष्यभगवान्माधवोबलः

निवामनेत्रस्फुरणादयः आसन्नंभयंशंसितुंशीलंयेषांते १२ तानालक्ष्यगोकुलान्निर्जग्मुरितितृतीयेनान्वयः भयोद्वि
ग्नाःभयंहेतुभ्याभीताः भयेनकंपमानाइतिवा १३ नतंविदंतीतिअतद्विदः १४ पशुवृत्तयः अतिवत्सलाः १५ कातरान् ॥६॥

८२

१६
भा०द०
पू०
६३

भीतान् २६ भगवंतं लक्षयंति यानि पदानि तैः पदैः सूचितया पदव्या मार्गेण २७ पदैर्मार्गज्ञानप्रकारमाह तद्दृति विशेषणैः श्रीकृष्णस्य अन्येषां पदानाम् अंतरांतरे मध्ये मध्ये तत्तद्योहेन गत्वा श्रुतीनां मार्गे सत्वरा अप्रमत्ताः योगिनस्तत्तदुपाध्य

प्रहस्य किंचिन्नोवाच प्रभावज्ञोऽनुजस्य सः २६ तेऽन्वेषमाणा दयितं कृष्णं सूचितया पदैः भगवल्लक्षणैर्जग्मुः पदव्या यमुनातटं ॥ ॥ २७ ॥ ॥ ते तत्र तत्राब्जयवांकुशाशनिध्वजोपपन्नानि पदानि विश्पतेः मार्गे गवामन्यपदांतरांतरे निरीक्ष्यमाणाय पुरंगसत्वराः २८ अंतर्हृदे भुजगभोगपरीतमारात्कृष्णं निरीहमुपलभ्य जलाशयांते गोपांश्च मूढधिषणान्परितः पशूंश्च संक्रंदतः परमकश्मलमापुरार्त्ताः २९ गोप्योऽनुरक्तमनसो भगवत्यनंते तत्सौहृदस्मितविलोकगिरः स्मरंत्यः ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकं २० ताः कृष्णमातरमपत्यमनुप्रविष्टां तुल्यव्यथाः समनुगृह्य शुचः स्रवंत्यः तास्ताः प्रियव्रजकथाः कथयंत्य आसन् कृष्णाननेऽर्पि

पवादेन यथा परं तत्त्वं मृगयंते तत्तद्दिति भावः २८ ततश्च सर्पशरीरवेष्टितं तद्दृशो मृतकप्रतीकाः ॥ २९ ॥ तं कृष्णं संदूरान्निरीक्ष्य गोपाश्च पशूंश्च तथा निरीक्ष्य आर्ताः परमकश्मलं परमोहं प्रापुः २९ प्रियेण श्रीकृष्णेन व्यतिहृतं विरहितं त्रैलो क्यंविदुः॥३०॥

॥२२॥ अनन्यगतिमात्मानमित्थंनिरीक्ष्य अतएवात्महेतोः स्वगोकुलमतिदुःखितमाज्ञाय उरगबंधात् उदतिष्ठदित्यन्वयः
२३ तस्य प्रथ्यमानेन वपुषा व्यथितात्मशरीरो भुजंगः कुंडलीमुन्मुच्य तं त्यक्त्वा कुपितः स्वफणानुन्नमय्य श्वसन् केवलमीक्ष
माणस्तस्थौ कथंभूतः श्वसनरंध्रेषु नासाविवरेषु विषं यस्य सः तथा अंबरीषो मंडकपाकभाजनं तद्वत्संतप्तानि स्तब्धानि ईक्ष

कृष्णप्राणान्निर्विशतो नंदादीन्वीक्ष्य तं ह्रदं प्रत्यषेधत्स भगवान्रामः कृष्णानुभाववित् २२
इत्थं स्वगोकुलमनन्यगतिं निरीक्ष्य सस्त्रीकुमारमतिदुःखितमात्महेतोः आज्ञाय मर्त्यपदवी
मनुवर्त्तमानः स्थित्वा मुहूर्त्तमुदतिष्ठदुरंगबंधात् २३ तत्प्रथ्यमानवपुषा व्यथितात्मभोगस्त्य
क्त्वोन्नमय्य कुपितः स्वफणान्भुजंगः तस्थौ श्वसन्श्वसनरंध्रविषांबरीषस्तब्धेक्षणोल्मुक
मुखो हरिमीक्षमाणः २४ तं जिह्वया द्विशिखया परिलेलिहानं द्वे सृक्किणी ह्यतिकरालवि
षाग्निदृष्टिं क्रीडन्नमुं परिससार यथा खगेंद्रो बभ्राम सोऽप्यवसरं प्रसमीक्षमाणः २५ एवं परिभ्र
महतौजसमुन्नतांसमानम्य तत्पृथुशिरःस्वऽधिरूढ आद्यः तन्मूर्द्धरत्ननिकरस्पर्शातिताम्र
पादांबुजोऽखिलकलादिगुरुर्ननर्त ॥२६॥

॥णानि यस्य सः तथा उल्मुकानि मुखेषु यस्य स तथा स च २४ हरिश्च क्रीडन्
तममुं सर्पं परिससार परितो बभ्राम अतिकरालाविषाग्नियुक्ता दृष्टिर्यस्य तं जिह्वया द्विशिखयेति प्रतिमुखमेव २५ एवं परिभ्रमेणे
वहतमोजो यस्य तम् उन्नतावंसौ यस्य तं तस्य मूर्द्धसु ये रत्ननिकराः तेषां स्पर्शेनात्यरुणं पादांबुजं यस्य सः ननु कथं चंचलेषु शिरस्सु नृ

१६
भा०द०
पू०
६४

उपसेदुःप्राप्ताः २४ शतैकशीर्ष्णः शतंएकानिमुख्यानिशीर्षाणियस्यतस्यक्षीणायुषोऽपिपुनर्भ्रमतःयद्यच्छिरोननमतेस्त
स्यतांनजहातिनृत्यच्छलेनांघ्रिपातैस्तत्तन्ममर्दतदाचक्षास्यतोमुखेभ्योनस्तोनासाविवरेभ्यश्चअसृग्वमन् २५ पुनरपि
रुषाउच्चैर्निःश्वसतोयद्यत्समुन्नमतितत्तदाघातेनानुनमयन् इहअस्मिन्नवसरेदृष्टैर्गंधर्वादिभिःशेषासनःपुराणपुरुष

तंनत्तुमुद्यतमवेक्ष्यतदाततदीयगंधर्वसिद्धसुरचारणदेववध्वः प्रीत्यामृदंगपणवान
कवाद्यगीतपुष्पोपहारनुतिभिःसहसोपसेदुः २६ यद्यच्छिरोननमतेऽगशतैकशीर्ष्णः
स्तत्तन्ममर्दखलदंडधरोंघ्रिपातैः क्षीणायुषोभ्रमतउल्बणमास्यतोऽसृक्कनस्तोवमन्प
रमकश्मलमापनागः २७ तस्याक्षिभिर्गरलमुद्वमतःशिरस्सुयद्यत्समुन्नमतिनिःश्वस
तोरुषोच्चैः नृत्यन्पदाऽनुनमयन्दमयांबभूवपुष्पैःप्रपूजितइवेहपुमान्पुराणः २८ तच्चि
त्रतांडवविरुग्णफणातपत्रोरक्तंमुखैरुरुवमन्नृपभग्नगात्रः स्मृत्वाचराचरगुरुंपुरुषंपु
राणंनारायणंतमरणंमनसाजगाम २९ कृष्णस्यगर्भजगतोऽतिभरावसन्नंपार्ष्णिप्रहा

इवयशोदानंदनःपुष्पैःप्रपूजितःयद्वातदागंधर्वादिभिःपुष्पैःप्रपूजि रपरिरुग्णफणातपत्रं॥ ७॥
तोगोपैःपुराणःपुमानिवदृष्टइति यद्वापुष्पैःप्रपूजितइवप्रसन्नःसन्दमयांबभूव हितंकृतवानित्यर्थः २९ अ
रणंशरणं ३० गर्भेजगंतियस्यतस्यअतिभरेणअवसन्नंआक्रांतंपार्ष्णिःपादएषं॥ ७॥ ७॥ ७॥ ७॥ ७॥

राम
६४

न्नाद्यं श्रीकृष्णं श्लथयंतो विस्रंसमाना वसनादयो यासां ताः ३१ ताः शरणं प्रपन्नाः सत्यस्तं प्रणेमुः सुविग्नमनसः अतिविह्वलचित्ताः भुवीति तस्मिन्स्थाने जलादधस्ताद्वा तीरे वा शमलस्य पापात्मनोऽपि भर्त्तुर्मोक्षेप्सवः भर्त्तुर्यच्छमलं तस्य वा भूतपतिं प्राणिमात्रस्य पतिं शरणदं आश्रयप्रदं ३२ प्रथमं तावत्कुपितं भगवंतं दंडानुमोदनेनोपशमयंत्यः स्तुवंति न्या

दृष्ट्वाऽहिमाद्यमुपसेदुरमुष्य पत्न्य आर्त्ताः श्लथद्वसनभूषणकेशबंधाः ३१ तास्तं सुविग्नमनसोऽथ पुरस्कृतार्भाः कायं निधाय भुवि भूतपतिं प्रणेमुः साध्व्यः कृतांजलिपुटाः शमलस्य भर्त्तुर्मोक्षेप्सवः शरणदं शरणं प्रपन्नाः ३२ नागपत्न्य ऊचुः न्याय्यो हि दंडः कृतकिल्बिषेऽस्मिंस्तवावतारः खलनिग्रहाय रिपोः सुतानामपि तुल्यदृष्टेर्धत्से दमं फलमेवानुशंसन् ३३ अनुग्रहोऽयं भवता कृतो हि नो दंडोऽसतां ते खलु कल्मषापहः यद्दंदशूकत्वममुष्य देहिनः क्रोधोऽपि तेऽनुग्रह एव संमतः ३४ तपः सुतप्तं किमनेन पूर्वं निरस्तमानेन च मानदेन धर्म्मोऽथ वा सर्वजनानुकंपया यतो भवांस्तुष्यति सर्वजीवः ३५ न्याय्यो हीति तत्र

दंडानुमोदनं षड्भिः ईश्वरमिश्रहरेस्तुतिः प्रार्थनं पंचभिः श्लोकैस्ततः पन्नगयोषितां न च निग्रहानुग्रहलक्षणं वैषम्यं तवास्तीत्याहुः धत्से दममिति अनुशंसन् आलोचयन् ३३ निग्रहोऽप्यनुग्रहोऽयमुक्तं इदानीमनुग्रह एवायं न निग्रह इत्याहुः अनुग्रह इति नः अस्माकं यस्मादमुष्य सर्प्पत्वं दृश्यते अतस्तन्मूलपापनिवर्त्तको दंडोऽनुग्रह एव क्रोधत्वेन प्रतीयमानोऽपीत्यर्थः ३४ महांश्चायमनु

इदमित्यस्य पूर्वं पुण्यमभिमानं दति तप इति स्वधर्म्मा नहि
अस्मिन्मानदेन त्वमसंजीवनां जीवयतीति सर्वजीवः ३५ ॥

नतपआदिनिमित्तएवभाग्योदयः किंत्वचिंत्यंतवक्रपावैभवमित्याहुः श्लोकत्रयेण कस्यानुभावइति तपआदि नाब्रह्मादयोऽपियस्याः श्रियः प्रसादमिच्छंतिसाश्रीर्ललनापिश्रीरेवललना उत्तमास्त्रीयस्यत्वदंघ्रिस्पर्शाधिकारस्य वांछयातपआचरत् अस्यसर्पस्यसकिंकृतवानइतिकोवेतीत्यर्थः ३६ यत्तवपादरजः प्रपन्नाः प्राप्ताः पारमेष्ठ्याद्यपितु म च्छंमन्यंते ३२ अहोतदेष अयत्नतएवप्रापअन्यैः श्र्यादिभिरपि पुनः कथंभूतंपादरजः यदिच्छतः सेव्यंमेभवति

कस्यानुभावोऽस्यनदेवविद्महेतवांघ्रिरेणुस्पर्शाधिकारः यद्वांछयाश्रीर्ललनाऽ चरत्तपोविहायकामान्सुचिरंधृतव्रता ३६ ननाकपृष्ठंनचसार्वभौमंनपारमेष्ठ्यंन रसाधिपत्यं नयोगसिद्धीरपुनर्भवंवावांछंतियत्पादरजःप्रपन्नाः ३२ तदेषनाथा पदुरापमन्यैस्तमोजनिः क्रोधवशोऽप्यहीशः संसारचक्रेभ्रमतः शरीरिणोयदिच्छ तः स्याद्विभवः समक्षः ३८ नमस्तुभ्यंभगवतेपुरुषायमहात्मने भूतावासायभूता यपरायपरमात्मने ३९ ज्ञानविज्ञाननिधयेब्रह्मणेऽनंतशक्तये ॥ तिप्रार्थयमानस्यएवस मक्षः प्रत्यक्षएवविभवः अपेक्षितासंपद्भवति ३८ नमस्तुभ्यंभगवतेअचिंत्यैश्वर्यादिगुणाय तदुपपादनायदश भिः श्लोकैर्विशेषणानिपुरुषायपूर्षुअंतर्यामिरूपेणवर्तमानायमहात्मनेएवमपिनातिपरिच्छिन्नाय कुतः भूतावासा यआकाशादाश्रयाय एतदपिकुतः भूतायपूर्वमपिसतेकुतः पराय कारणाय किंचपरमात्मने कारणातीताय ३९ कारण

ज्ञानं ज्ञप्तिः विज्ञानं चिच्छक्तिः उभयोर्निधयेताभ्यांपूर्णाय कथंतथात्वं अतउक्तं ब्रह्मणे अनंतशक्तये कथंभूताय ब्रह्मणे अगुणाय अविकाराय कथंभूताया ऽनंतशक्तये प्राकृताय प्रकृतिप्रवर्तकाय अप्राकृतायेतिवा अप्राकृतायानंतशक्तियुक्ताय अयमर्थः अगुणत्वादविकारंब्रह्मइतिज्ञप्तिमात्रत्वात्कारणातीतं प्रकृतिप्रवर्तकोऽनंतशक्तिः विज्ञाननिधित्वादीश्वरः कारणंतदुभयात्मनेनमइति ४० अनंतशक्तित्वात्कालशक्त्याविश्वस्रष्टृत्वादिरूपेणनमस्यंति कालायकालस्वरूपाय कालनाभायकालशक्त्याश्रयाय कालाऽवयवानांसूक्ष्मादिसमयानांसाक्षिणेततश्चविश्वायविश्वरूपायतर्हिकिं

अगुणायाविकारायनमस्तेप्राकृतायच ४० कालायकालनाभायकालावयवसाक्षिणे विश्वायतदुपद्रष्ट्रेतत्कर्त्रेविश्वहेतवे ४१ भूतमात्रेंद्रियप्राणमनोबुध्याशयात्मने त्रिगुणेनाभिमानेनगूढस्वात्मानुभूतये ४२ नमोऽनंतायसूक्ष्मायकूटस्थायविपश्चिते नानावादानुरोधायवाच्यवाचकशक्तये ४३ ॥

जडोऽहंनहि तदुपद्रष्ट्रे नचद्रष्टृमात्राय किंतुतत्कर्त्रेनचकर्तृमात्रायविश्वहेतवेसर्वकारकरूपाय ४१ नदेवाहुः भूतमात्रेंद्रियप्राणमनोबुद्ध्याशयात्मने आशयश्चित्तं भूतादिरूपायअतःसर्वकारकरूपायेति अहंकारात्मतयानमस्यंति त्रिगुणेनेति एवंसृष्टिकार्येयस्त्रिगुणोऽभिमानस्तेन गूढास्वांशभूतानामात्मनांमनुजीवानामनुभूतिर्येनतस्मै ४२ तंत्वहंकारानावृतइतिस्तुवंति नमोऽनंतायअहंकारापरिच्छेदात् अतःसूक्ष्माय अदृश्यत्वात अतएवकूटस्थाय उपाधिकृतविकाराभावात अतएवविपश्चितेसर्वज्ञाय एवंवस्तुतःस्तुत्वाऽचिंत्यमायात्वेनस्तुवंति नानावादानुरोधाय अस्तिनास्तिसर्वज्ञः किंचिज्ज्ञः बद्धःमुक्तः एकअनेकइत्यादीन्नानावादाननुरुणद्धि

१६
भा० द०
टी०
६६

अनावृततत्त्वमेवहेत्वंतरेणापिसूचयंतःस्तुवंतिनमःप्रमाणमूलायचक्षुरादीनांचक्षुरादिरूपाय ज्ञानरवकवयेस्वयंतत्त्रिवे
क्षज्ञानाय कुतःशास्त्रयोनयेवेदात्मकनिःश्वासाय किंचप्रवृत्तायनिवृत्तायनिगमायनमोनमः ४४ किंचअनादैर्भ्य
दीनामेवचतुर्मूर्तिरूपेणसर्वोपास्यत्वेननमंति नमःकृष्णायेतिश्लोकेन रामायसंकर्षणाय वसुदेवसुतायचवसुदेवशब्दि
तंशुद्धंसत्वंतत्रप्रकाशमानायवासुदेवायेत्यर्थः सात्वतामुपासकानांपतयेसालोक्यादिनापालकाय एवंचतुर्मूर्तयेकृ
ष्णायतुभ्यंनमइति ४५ कथंचतुर्मूर्तितेतिनिराहुः नमोगुणप्रदीपायेति गुणाःअंतःकरणानितानिप्रदीपयतिप्रकाशयती

नमःप्रमाणमूलायकवयेशास्त्रयोनये प्रवृत्तायनिवृत्तायनिगमायनमोनमः ४४
नमःकृष्णायरामायवसुदेवसुतायच प्रद्युम्नायानिरुद्धायसात्वतांपतयेनमः ४५
नमोगुणप्रदीपायगुणात्मच्छादनायच गुणवृत्त्युपलक्ष्यायगुणद्रष्ट्रेस्वसंविदे ४६ अ
व्याकृतविहारायसर्वव्याकृतसिद्धये ॥ तितयातस्मैचित्ताद्यधिष्ठातृत्वेनचतुर्मूर्तिनेत्यर्थः ननु तथाप्ये
कस्यैवकथंचतुर्धात्वमतआहुः गुणात्मच्छादनायतैरेवगुणैरुपासकानांफलवैचित्र्यायआत्मानमाच्छाद्यनानात्वेनप्र
काशमानायेत्यर्थः ननुकथंतर्हिप्रतीतिरतआहुःगुणवृत्त्युपलक्ष्याय चित्तादीनांचेतनाध्यवसायादिवृत्तिभिरुपलक्ष्याय
उपलक्षणमेवाहुः गुणद्रष्ट्रेतत्साक्षिणे कथंचिदुपलक्ष्यएवनज्ञेयइत्याहुः स्वसंविदेअगोचरायेत्यर्थः ४६ अगोचर
त्वमुपलक्ष्यत्वंच दर्शयंतोनमंति अव्याकृतविहारायअतर्क्यमहिम्नइत्यर्थः सर्वव्याकृतसिद्धयेसर्वकार्याणांप्रतिप्रका
शहेतुत्वेनोपलक्षणयोग्यायइत्यर्थः उपलक्षणांतरमाहुः हेहृषीकेशकरणप्रवर्तक ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

राम
६६

किंविषयलिप्सया न मुनयेआत्मारामाय किंसाधनवशेनवानहि मौनशीलिनेमौनमात्मारामत्तातत्स्वभावाय ४७
कुतः परावरगतिज्ञाय स्थूलसूक्ष्माणांगतिज्ञत्वेननक्वापिसज्जमानायेत्यर्थः अपिचसर्वाध्यक्षायसर्वस्याधिष्ठात्रेकुत
एतत् अविश्वायनविश्वंयस्मिनतन्निषेधावधयेविश्वायचतद्विवर्ताधिष्ठानायेत्यर्थः किंचतद्द्रष्ट्रेअध्यासापवाद
साक्षिणे· अपिचअस्यचविश्वाध्यासस्यतदपवादस्यविद्याऽविद्याभ्यांहेतवे यद्वाअविश्वायविश्वतैजसाद्यवस्थार
हितायविश्वायचमाययास्वांशैः तत्तदवस्थाय तद्द्रष्ट्रेतासामवस्थानांभावाभावसाक्षिणेअन्यत्समानं तस्मात्सर्वगति

हृषीकेशनमस्तेस्तुमुनयेमौनशीलिने ४७ परावरगतिज्ञायसर्वाध्यक्षायतेनमः अ
विश्वायचविश्वायतद्द्रष्ट्रेऽस्यचहेतवे ४८ त्वंह्यस्यजन्मस्थितिसंयमान्प्रभोगुणै
रनीहोऽकृतकालशक्तिधृक् तत्तत्स्वभावान्प्रतिबोधयन्सतःसमीक्षयाऽमोघविहा
रईहसे ४९ तस्यैवतेऽमूस्तनवस्त्रिलोक्यांशांता अशांताउतमूढयोनयः ॥

ज्ञत्वसर्वाधि
ष्ठातृत्वात्मारामत्वादिभिर्निरतिशयैश्वर्यायतुभ्यंनमइति विशेषणैरसंकीर्णैः पंचपंचाशतानुतः अहिस्तोभिः
प्रसन्नोवस्तासामिवभवेद्धरिः ४८ एवंतावद्दंडानुमोदनेननमस्कारैश्चभगवंतंप्रसाद्येदानींत्वदधीनानांप्राणिनांको
ऽपराधइत्याशयवंतःप्रार्थयंते त्वंहीति अस्यलोकस्यजन्मादित्वमेवाकृतअकरोः ततश्चतांस्तान्संस्काररूपेणसतः
स्वभावानघोरत्वादीनप्रतिबोधयनईहसेक्रीडसि यद्वाअस्यजन्मादीस्त्वमीहसइत्यन्वयः कथंभूतः अकृताअनादि
र्याकालशक्तिस्तांधारयतीतितथाअन्यत्समानं ४९ अतस्तस्यतवैवअमूस्तनवस्तन्यंतइतितनवः क्रीडोपस्कारास्तथा

१६
भा० द०
पू०
६२

सतांधर्मपरिपालनेच्छयाईहतः प्रवर्त्तमानस्य अतस्तानवितुंस्यात् स्थितस्य ५० एवंतवाप्रियाचरणाद्यःऽपराधस्तर्हिसोढव्य इति ५१ ५२ युष्मदनुग्रहेऽन्येषांमृत्युरेवेतिचेतत्रेत्याहुः विधेहीतित्वदाज्ञयाप्राणिनोनाद्यामेतिभावः ५३ ५४ ५५ यदसद्ग्रहः

शान्ताःप्रियास्तेह्यधुनाऽवितुंसतांस्यात्तथ्यतेधर्मपरीप्सयेहतः ५० अपराधःसकृद्भर्त्रासोढव्यःस्वप्रजाकृतःक्षन्तुमर्हसिशान्तात्मन्मूढस्यत्वामजानतः ५१ अनुगृह्णीष्वभगवन्प्राणांस्त्यजतिपन्नगः स्त्रीणांनःसाधुशोच्यानांपतिःप्राणःप्रदीयतां ५२ विधेहितेकिंकरीणामनुष्ठेयंतवाज्ञया यच्छ्रद्धयाऽनुतिष्ठन्वैमुच्यतेसर्वतोभयात् ५३ श्रीशुकउवाच इत्थंसनागपत्नीभिर्भगवान्समभिष्टुतः मूर्च्छितंभग्नशिरसंविससर्जांघ्रिकुट्टनैः ५४ प्रतिलब्धेंद्रियप्राणःकालियःशनकैर्हरिम् कृच्छ्रात्समुच्छ्वसन्दीनःकृष्णंप्राहकृतांजलिः ५५ कालियउवाच वयंखलाःसहोत्पत्त्यातामसादीर्घमन्यवः स्वभावोदुस्त्यजोनाथलोकानांयदसद्ग्रहः ५६ त्वयासृष्टमिदंविश्वंधातर्गुणविसर्जनं नानास्वभाववीर्यौजोयोनिबीजाशयाकृति ५७ वयंचतत्रभगवन्सर्प्पाजात्युरुमन्यवः कथंत्यजामस्त्वन्मायांदुस्त्यजांमोहिताःस्वयं ५८ इति यतःस्वभावोऽसत्यहह्नसः यद्वा यतःस्वभावादसतिदेहादौयोग्रहःसदुस्त्यजइति ५६ गुणैर्विविधतयासृज्यतइतिगुणविसर्जनंतत्रापिनानास्वभावादयोयस्यतत् ५७ जासा

मिवस्थरक्षमीवर्तिकविषयस्यजातः॥

हियस्मात् तत्रत्वन्मायात्यागेभवानेवकारणमिति अनुग्रहंविधेहिममाज्ञयाखादंतीनि ईश्वरत्वान्निग्रहंवाविधेहीति।
५९ ६० यतोगोभिर्नृभिश्चनदीभुज्यतामिति ६१ नयुष्मतोभयमाप्नुयात्तस्ययुष्माभिर्भयंनोत्पादनीयमित्याज्ञाइत्थोपित्वया।

भवानहिकारणंतत्रसर्वज्ञोजगदीश्वरः अनुग्रहंनिग्रहंवामन्यसेतद्विधेहिनः ५९ श्रीशु
कउवाच इत्याकर्ण्यवचःप्राहभगवान्कार्यमानुषः नात्रस्थेयंत्वयासर्प्पसमुद्रंयाहिमा
चिरं ६० स्वज्ञात्यपत्यदाराढ्योगोनृभिर्भुज्यतांनदी यएतत्संस्मरेन्मर्त्यस्तुभ्यंमदनुशासनं
कीर्त्तयन्नुभयोःसंध्योर्न्नयुष्मद्भयमाप्नुयात् ६१ योस्मिन्स्नात्वामदाक्रीडेदेवादींस्तर्प्पयेज्ज
लैः उपोष्यमांस्मरन्नर्चेत्सर्वपापैःप्रमुच्यते ६२ द्वीपंरमणकंहित्वाह्रदमेतमुपाश्रितः य
द्भयात्ससुपर्णस्त्वांनाद्यान्मत्पादलांछितं ६३ श्रीशुकउवाच एवमुक्तोभगवताकृष्णेना
द्भुतकर्मणा तंपूजयामाससुदानागपत्न्यश्चसादरं ६४ दिव्यांबरस्रग्मणिभिःपरार्ध्यैरपिभू
षणैः दिव्यगंधानुलेपैश्चमहत्योत्पलमालया ६५ पूजयित्वाजगन्नाथंप्रसाद्यगरुडध्वजं
ततःप्रीतोभ्यनुज्ञातःपरिक्रम्याभिवाद्यतं ६६ सकलत्रसुहृत्पुत्रोद्वीपमध्येजगामह
तदैवसामृतजलायमुनानिर्विषाऽभवत् ६७ ॥ निर्गतव्यमित्याह योस्मिन्निति त्वयिस्थितेतन्नसंभ
वतीतिभावः ६२ नचतववकगरुडभयंभवेदित्याहद्वीपमिति ६३ ॥ ६४॥ ६५॥ ६६॥ ६७॥ १६॥१६

इतिश्रीभागवतेदशमेटीकायांषोडशोध्यायः १६ नागंसप्तदशेनागालयंतंनिरयापयत्‌ वंधूंस्वदुःखतः श्रांतान्सुप्तांस्त्वदवादपात्‌ १ असमंजसंअप्रियं १ उपहार्यैः भक्ष्यैः सर्प्पजनैः सर्प्पायतेर्जनैः वानस्पत्यः वनस्पतेर्मूलेदेयः नागानां तद्बाधापरिहाराययोबलिर्निरूपितः उपकल्पितः २ तेचनागाः स्वंस्वंभागंजनैर्दत्तंसुपर्णायप्रयच्छंति ततोभीताः गो

अनुग्रहाद्भगवतः क्रीडामानुषरूपिणः इतिश्रीभागवतेमहापुराणेदशमस्कंधेकालियनिर्य्यापणंनामषोडशोध्यायः १६ राजोवाच नागालयंरमणकंकस्मात्तत्याजकालियः कृतंकिंवासुपर्णस्यतेनैकेनासमंजसं १ श्रीशुकउवाच उपहार्यैः सर्प्पजनैर्मासिमासीहयोबलिः वानस्पत्योमहाबाहोनागानांप्राङ्निरूपितः २ स्वंस्वंभागंप्रयच्छंतिनागाः पर्वणिपर्वणि गोपीथायात्मनः सर्वेसुपर्णायमहात्मने ३ विषवीर्य्यमदाविष्टः काद्रवेयस्तुकालियः कदर्थीकृत्यगरुडंस्वयंतंबुभुजेबलिं ४ तच्छ्रुत्वाकुपितोराजन्‌ भगवान्‌ भगवत्प्रियः विजिघांसुर्म्महावेगः कालियंसमुपाद्रवत्‌ ५ तमापतंतं तरसाविषायुधः

पीथायरक्षणाय ३ विषवीर्य्याभ्यांयोमदस्तेनाविष्टः काद्रवेयः कद्रुपुत्रः ग ४ प्रत्यभ्ययादुच्छ्रितनैकमस्तकः रुडंकदर्थीकृत्यअविगणय्य यद्वा उपहार्य्यैः सुपर्णभक्ष्यैः सर्प्पाएवजनास्तैर्नागानांसंबंधीयस्मिन्नेकेकोनागोदीयते तथाभूतोयोबलिः सुपर्णायनिरूपितः तत्रस्वंस्वंभागंसर्वेनागाः प्रयच्छंति कालियस्तुनप्रयच्छतिकिंत्वन्यैर्दत्तमपितं

योहं प्रतिजगाम उच्छ्रितनैकमस्तकः उन्नमितानेकफणः ददायुधः दंतायुधः करालजिह्वश्वासावुच्छ्वसितोग्रलो
चनश्च उच्छ्वसितानि उज्जृंभितानि उग्राणि लोचनानि यस्य सः ६ तार्क्ष्यपुत्रो गरुडः मधुसूदनस्य आसनं यस्मिन्सः

दद्भिः सुपर्णमदशद्ददायुधः करालजिह्वोच्छ्वसितोग्रलोचनः ६ तं तार्क्ष्यपुत्रः स निर
स्य मन्युमान् प्रचंडवेगो मधुसूदनासनः पक्षेण सव्येन हिरण्यरोचिषा जघान कद्रूसुतमु
ग्रविक्रमः ७ सुपर्णपक्षाभिहतः कालियोऽतीव विह्वलः ह्रदं विवेश कालिंद्यास्तद
गम्यं दुरासदं ८ तत्रैकदा जलचरं गरुडो भक्ष्यमीप्सितं निवारितः सौभरिणा प्रसह्य क्षु
धितोऽहरत ९ मीनान् सुदुःखितान्दृष्ट्वा दीनान्मीनपतौ हते कृपया सौभरिः प्राह तत्रत्य
क्षेममाचरन् १० अत्र प्रविश्य गरुडो यदि मत्स्यान्स खादति सद्यः प्राणैर्वियुज्येत स
त्यमेतद्ब्रवीम्यहं ११ तं कालियः परं वेद नान्यः कश्चन लेलिहः अवात्सीद्गरुडाद्भीतः
कृष्णेन च विवासितः १२ कृष्णं ह्रदाद्विनिष्क्रांतं दिव्यस्रग्गंधवाससं महामणिग
णाकीर्णं जांबूनदपरिष्कृतं ॥ १३ ॥

॥७॥ तस्य गरुडस्यागम्यं अगाध तथा च दुरासदं ॥ ८ ॥ तदगम्यत्वे का
रणमाह तत्रेति निवारितोपि ९।१०।११। लेलिहः सर्पः अतस्तत्रावात्सीत् १२ जांबूनदं सुवर्णं तेनालंकृतं १३ ॥

यत्रग्रीष्मेवनेवानिदाघोग्रीष्मः तेनतत्कालीनवह्न्यर्काभ्यांचभवतियोदवस्तापः अतिशाद्वलेअतिहरिततृणाकीर्णे यद्वा
अतिक्रांतशाद्वलेऽपिस्थाने ५ ननुशाद्वलमेवकुतस्त्यंतत्राह अगाधेति अगाधानितोयानियासांतासांह्र

सरित्सरःप्रस्रवणोर्मिवायुनाकल्हारकंजोत्पलरेणुहारिणा नविद्यतेयत्रवनौकसांदवो
निदाघवह्न्यर्कभवोऽतिशाद्वले ५ अगाधतोयह्रदिनीतटोर्मिभिर्द्रवत्पुरीष्याःपुलिनैः
समंततः नयत्रचंडांशुकराविषोल्वणाभुवोरसंशाद्वलितंचगृह्णते ६ वनंकुसुमितंश्री
मन्नदच्चित्रमृगद्विजं गायन्मयूरभ्रमरंकूजत्कोकिलसारसं ७ क्रीडिष्यमाणस्तत्कृ
ष्णोभगवान्बलसंयुतः वेणुंविरणयन्गोपैर्गोधनैःसंवृतोऽविशत् ८ प्रवालबर्हस्त
बकस्रग्धातुकृतभूषणाः रामकृष्णादयोगोपानृतुर्युयुधुर्जगुः ९ कृष्णस्यनृत्यतः
केचिज्जगुःकेचिदवादयन् वेणुपाणितलैःश्रृंगैःप्रशशंसुरथापरे १० गोपजातिप्रति
च्छन्नादेवागोपालरूपिणः ईडिरेकृष्णरामौचनटाइवनटंनृप ११ ॥आमणोह्रदघनैः

दिनीनांतटस्पर्शिभिरूर्मिभिः पुलिनैःसहद्रवत्पुरीषपंकोयस्यास्तस्याभुवः २ ६ क्षेपैरास्फोटनविकर्षणैः
संशाद्वलितंशाद्वलरूपतांचविषवदुल्वणाअपिसूर्यरश्मयोनगृह्णतेनहरंति ८ नद्धनमविशद्दिसुत्तरेणान्वयःन
दंतःचित्रामृगद्विजाश्चयस्मिन्गायंतोमयूराभ्रमराश्चयस्मिन्कूजंतःकोकिलाःसारसाश्चयस्मिन्ततअविशत ८।९।१०

भ्रामणादिप्रकारैर्नियुद्धेनबाहुयुद्धेनचिक्रीडतुः १२।१३ कुंभैःकुंभवृक्षफलैः अस्पृश्यत्वंनेत्रबंधश्वतदाद्यैर्मृगाणां
खगानांचचेष्टया १४ दुर्दुरप्लावैः मंडूकप्लुतिभिः संदोलिकयादोलालं वनेननृपाणामिवलीलया १५ नद्यः अद्रिद्रोण

चिक्रीडतुर्नियुद्धेनकाकपक्षधरौक्वचित् १२ क्वचिन्नृत्यत्सुचान्येषुगायकौवादकौ
स्वयं शशंसतुर्महाराजसाधुसाध्वितिवादिनौ १३ क्वचिद्बिल्वैःक्वचित्कुंभैःक्वचाम
लकमुष्टिभिः अस्पृश्यनेत्रबंधाद्यैःक्वचिन्मृगखगेहया १४ क्वचिच्चदर्दुरप्लावैर्विवि
धैरुपहासकैः कदाचित्स्पंदोलिकयाकर्हिचिन्नृपचेष्टया १५ एवंतौलोकसिद्धाभिः
क्रीडाभिश्चेरतुर्वने· नद्यद्रिद्रोणिकुंजेषुकाननेषुसरस्सुच १६ पशूंश्चारयतोगोपैस्तद्व
नेरामकृष्णयोः गोपरूपीप्रलंबोगादसुरस्तज्जिहीर्षया १७ तंविद्वानपिदाशार्हो भगवान्
सर्वदर्शनः अन्वमोदततत्सख्यंवधंतस्यविचिंतयन् १८ तत्रोपहूयगोपालान्कृष्णः।
प्राहविहारवित् हेगोपाविहरिष्यामोद्वंद्वीभूययथायथं १९ तत्रचक्रुःपरिवृढौगोपारामजनार्दनौ कृष्णसंघट्टिनःकेचिदासन्रामस्यचापरे २० ॥ ऽऽ यकुंजानिचएतेषु १६ चारयतोः
सतोस्तद्वनेतस्मिन्वनेनयोर्जिहीर्षया १७।१८ यथायथंवयोबलाद्यनुरूपंद्वंद्वीभूय १९. परिवृढौनायकौ त
॥ त्रकेचनकृष्णसंघट्टिनः कृष्णपक्षीयाः २० ॥ ७ ॥ ७ ॥

॥२१॥वाह्यमानाः पृष्ठेनोह्यमानाः २२ २३ २४ कृष्णदृष्टिवंचनायअवरूह्यतेऽस्मिन्नित्यवरोहणंमर्य्यादाततःपरं दूरमगात २५ धरणींधरेंद्रवद्गौरवंयस्यतंनिजंआसुरंवपुरास्थितः पुरटपरिच्छदःसुवर्णालंकारःतडितद्युमान्विद्यु द्दीप्तिमान् इत्यलंकारोपमा उडुपतिवाडितिरामोपमा उडुपतिंवहत्युडुपतिवाट्यदयथोचितस्थानेषुस्थिताविद्यु

आचेरुर्विविधाः क्रीडावाह्यवाहकलक्षणाः यत्रारोहंतिजेतारोवहंतिचपराजिताः २१
वहंतोवाह्यमानाश्चचारयंतश्चगोधनं भांडीरकंनामवटंजग्मुः कृष्णपुरोगमाः २२ रा
मसंघट्टिनोयर्हिश्रीदामवृषभादयः क्रीडायांजयिनस्तांस्तानूहुः कृष्णादयोनृप २३ उ
वाहकृष्णोभगवान्श्रीदामानंपराजितः वृषभंभद्रसेनस्तुप्रलंबोरोहिणीसुतं २४ अवि
षह्यंमन्यमानः कृष्णंदानवपुंगवः वहन्द्रुततरंप्रागादवरोहणतःपरं २५ तमुद्वहन्धर
णीधरेंद्रगौरवंमहाऽसुरोविगतरयोनिजंवपुः सआस्थितःपुरटपरिच्छदोबभौतडिद्द्यु
मानुडुपतिवाडिवांबुदः २६ निरीक्ष्यतद्वपुरलमंबरेचरत्प्रदीप्तदृग्भ्रुकुटितटोग्रदंष्ट्रकं ज्व
लच्छिखंकटककिरीटकुंडलत्विषाद्भुतंहलधरईषदत्रसत् २७ ऽतोभवंतिउपरिचोडुपतिस्तदासौ ऽम्बुदोययाभातितद्वद्भावित्यर्थः २६ अलमतिवेगेनप्रदीप्तेदृशौयस्मिन्वपुषिततभ्रुकुटितटेसंस्थाउग्रादंष्ट्राय स्मिनततप्रदीप्तदृकभ्रुकुटितटंयस्मिनउग्रादंष्ट्रायस्मिनतच्चतच्चेतिवा ज्वलंत्यःशिखाःकेशायस्मिन्तत २७ ॥ ७ ॥

आगतस्मृतिरभय इव आत्मनः सार्थं गोपसमूहं विहाय हरंतं रिपुं अहनत् यद्वा विहायसा आकाशमार्गेण आत्मनः प्राप्तं अर्थमिव हरंतमिति वज्ररंहसा वज्रवेगेन मुष्टिना २८ अपस्मृतः गतस्मृतिः महारवं समीरयन् २९ ३० तद्दर्हणं ...

अथागतस्मृतिरभयो रिपुं बलो विहायसार्थमिव हरंतमात्मनः रुषाऽहनच्छिरसि दृढेन मुष्टिना सुराधिपो गिरिमिव वज्ररंहसा २८ स आहतः सपदि विशीर्णमस्तको मुखाद्वमन् रुधिरमपस्मृतोऽसुरः महारवं व्यसुरपतत्समीरयन् गिरिर्यथा मघवत आयुधाहतः २९ दृष्ट्वा प्रलंबं निहतं बलेन बलशालिना गोपाः सुविस्मिता आसन् साधु साध्विति वादिनः ३० आशिषोऽभिगृणंतस्तं प्रशशंसुस्तदर्हणं प्रेत्यागतमिवालिंग्य प्रेमविह्वलचेतसः ३१ पापे प्रलंबे निहते देवाः परमनिर्वृताः अभ्यवर्षन् बलं माल्यैः शशंसुः साधु साध्विति ३२ इति श्रीभागवते महापुराणे दशमस्कंधे प्रलंबवधो नामाऽष्टादशोऽध्यायः १८

श्रीशुक उवाच क्रीडासक्तेषु गोपेषु तद्गावो दूरचारिणीः स्वैरं चरंत्यो विविशुस्तृणलोभेन गह्वरं १ अजा गावो महिष्यश्च निर्विशंत्यो वनाद्वनं इषीकाटवीं विविशुः क्रंदंत्यो दावतर्षिताः २

शंसार्हं ३१ ३२ इति दशमेऽष्टादशः १८ ऊनविंशे निविष्टं तु गोपगोकुलमच्युतः मुंजारण्यमरण्याग्नेः रक्षत्तन्निपानतः १ दूरचारिणीः दूरचारिण्यः वनाद्वनांतरं निर्विशंत्यो दावेन तर्षिताः तृषिताः क्रंदंत्यः इषीकाटवी अत्युच्छ्रितघनतृणविशेषारण्यं

भा॰ द॰ वि॰ ८ [margin]

कृष्णरामौ आदी येषां तेन तु तौ ३ तासां गवां खुरैर्दच्छिन्नैः तृणैर्गोष्पदैरंकितैश्च भूप्रदेशैस्ततो वा गवां मार्गमन्व

तेऽपश्यंतः पशून्गोपाः कृष्णरामादयस्तदा। जातानुतापा न विदुर्विचिन्वंतो गवां गतिं ३।
तृणैस्तत्खुरदच्छिन्नैर्गोष्पदैरंकितैर्गवां मार्गमन्वगमन्सर्वे नष्टाजीव्या विचेतसः ४ मुं
जाटव्यां भ्रष्टमार्गं क्रंदमानं स्वगोधनं संप्राप्य तृषिताः श्रांतास्ततस्ते संन्यवर्तयन् ५ ता आ
हूता भगवता मेघगंभीरया गिरा स्वनाम्नां निनदं श्रुत्वा प्रतिनेदुः प्रहर्षिताः ६ ततः समंता
द्वनधूमकेतुर्यदृच्छयाऽभूत्क्षयकृद्वनौकसां समीरितः सारथिनोल्बणोल्मुकैर्विले
लिहानः स्थिरजंगमान्महान् ७ तमापतंतं परितो दवाग्निं गोपाश्च गावः प्रसमीक्ष्य भी।
ताः ऊचुश्च कृष्णं सबलं प्रपन्ना यथा हरिं मृत्युभयार्दिता जनाः ८ कृष्ण कृष्ण महावीर्य
हे रामामितविक्रम दावाग्निना दह्यमानान्प्रपन्नांस्त्रातुमर्हथः ९ नूनं त्वद्बांधवाः कृष्ण
न चार्हंत्यवसीदितुं वयं हि सर्वधर्मज्ञ त्वन्नाथास्त्वत्परायणाः १० श्रीशुक उवाच वचो निश
म्य कृपणं गोपानां भगवान्हरिः निमीलयत मा भैष्ट लोचनानीत्यभाषत ११ ॥ ६ ॥ ६ ॥

गमन् नष्टाजीव्या गतजीविकासाधनाः ४ मुंजाटव्यपि सैव इषीकाटवी ५।६ गोपानां नाशहेतुर्वनवह्निः सर्वतः प्रादुर

कृच्छ्रातगह्वरप्रवेशक्षुत्तृट्श्रमादिजनितात् १२ क्षणेनैवभांडीरंप्रापिताः ततः अक्षीरायुन्मील्यविस्मिताः १३ १४ १५
१६ श्रीदामादिस्वगोपानांस्वांगमारुह्यांदृष्यतां स्वैश्वर्य्यमाविरकरोद्दवनवह्निनिपानतः १ इतिदशमेटीकायामेकोनविंशः

तथेतिमीलिताक्षेषुभगवानग्निमुल्वणं पीत्वामुखेनतान्कृच्छ्रात्योगाधीशोव्यमोच
यत् १२ ततश्चतेऽक्षीरायुन्मील्यपुनर्भांडीरमापिताः निशम्यविस्मिताआस न्नात्मानंगा
श्चमोचिताः १३ कृष्णस्ययोगवीर्यंतद्योगमायानुभावितम् दावाग्नेरात्मनःक्षेमंवीक्ष्यते
मेनिरेऽमरं १४ गाःसन्निवर्त्यसायान्हेसहरामोजनार्दनः वेणुंविरणयन्गोष्ठमगाद्गोपै
रभिष्टुतः १५ गोपीनांपरमानंदआसीद्गोविंददर्शने क्षणंयुगशतमिवयासांयेनविनाऽ
भवत् १६ इतिश्रीभागवतेमहापुराणेदशमस्कंधेदावाग्निपानंनामएकोनविंशोध्या
यः १९ श्रीशुकउवाच तयोस्तदद्भुतंकर्मदावाग्नेर्मोक्षमात्मनः गोपाःस्त्रीभ्यःसमाच
ख्युःप्रलंबवधमेवच १ गोपवृद्धाश्चगोप्यश्चतदुपाकर्ण्यविस्मिताः मेनिरेदेवप्रवरौकृ
१९ विंशेप्रावृट्शरच्छोभावर्णनेनवनोचिताः प्रावृट्क्रीडानिरूप्यंतेगोपरामसुहृत् ॥ कृष्णरामौव्रजंगतौ २
जौहरेः १ हेयादेयोपमोनेनप्रावृट्शरदृतुश्रियोः वर्णनंत्वऽद्भुतैश्वर्य्यकृष्णलीलाविवक्षयां ॥ १ ॥ २ ॥ ३ ॥

तत्रप्रावृड्वर्णनंततआदिह्याविंशत्यासर्वेषांप्राणिनांसमुद्भवउत्पत्तितोजीवनतश्चयस्यांसाप्रावृट् विद्योतमानाः
परिधयः परिवेषादिशोवायस्यांसा विस्फूर्जितंसंक्षुभितंनभस्तलंयस्यांसा ३ सांद्रैर्निबिडैर्नीलांबुदैर्विद्युद्गर्जितस
हितैराच्छन्नंसगुणंगुणैराच्छन्नंजीवास्यंविद्युद्गर्जितांदुद्दानांसत्वरजस्तमोभिरुपमा ४ पर्जन्यः सूर्यः स्वगोभिः रश्मिभिः
कालेयथोचितसमये अत्रराजोपमाकरादानतः समयेपुनर्दानतश्चसूचिता ५ अस्यविश्वस्यप्राणनंआप्या

ततःप्रावर्ततप्रावृट्सर्वसत्वसमुद्भवा विद्योतमानपरिधिर्विस्फूर्जितनभस्तला ३ सां
द्रनीलांबुदैर्व्योमसविद्युत्स्तनयित्नुभिः अस्पष्टज्योतिराच्छन्नंब्रह्मेवसगुणंबभौ ४ अ
ष्टौमासान्निपीतंयद्भूम्याश्चोदमयंवसु स्वगोभिर्मोक्तुमारेभेपर्जन्यःकालआगते ५॥
तडिद्वंतोमहामेघाश्चंडश्वसनवेपिताः प्राणनंजीवनंह्यस्यमुमुचुः करुणाइव ६
तपः कृशादेवमीढाआसीद्वर्षीयसीमही यथैवकाम्यतपसस्तनुःसंप्राप्यतत्फलं ७
निशामुखेषुखद्योतास्तमसाभांतिनग्रहाः यथा पापेनपाखंडानहिवेदाःकलौयुगे ८॥

यनकरंजीवनमुदकंमुमुचुः कृपालवोयथातप्तंजनंनिरीक्ष्यानुकंपमानाः तदाप्यायनायस्वजीवनमपित्यजंति
तद्वन्महांतोमेघास्तडिन्नेत्रैर्विश्वंतप्तंनिरीक्ष्यवायुभिर्वेपिताः संतोजीवनंमुमुचुरिति॥ ६॥ तपसाग्रीष्मेणकृ
शादेवमीढापर्जन्यसिक्तावर्षीयसीउच्छूनापुष्टा काम्यंतपोयस्यतस्यतनुः कामान्संप्राप्ययथेति ७। ८ ॥ ३ ॥ ६ ॥

नित्यकर्मावसानेआचार्य्यनिनदंश्रुत्वातच्छिष्याः यथाअधीयंतेतद्वदिति ९ अनुशुष्यतीः अनुशुष्यंत्यः अ स्वतंत्रस्यइंद्रियपरतंत्रस्यस्वतंत्रस्यनिरंकुशस्येतिवा १० हरिभिर्नीलैः शष्यैर्बालतृणैर्नीलवर्णा — क्वचिदिंद्रगो पैः कीटविशेषैः लोहिनातत्रतत्रउच्छिलीध्रैः छत्राकारैः उद्भिदैः कृतच्छायानृणांराज्ञांश्रीः सेनासंपदिव ११।

श्रुत्वापर्जन्यनिनदंमंडूकाव्यसृजन्गिरः तूष्णींशयानाः प्राग्यद्वत्ब्राह्मणानियमात्यये

९ आसन्नुत्पथवाहिन्यः क्षुद्रनद्योऽनुशुष्यतीः पुंसोयथाऽस्वतंत्रस्यदेहद्रविणसंपदः

१० हरिताहरिभिःशष्पैरिंद्रगोपैश्चलोहिता उच्छिलीध्रकृतच्छायानृणांश्रीरिवभूरभू

त् ११ क्षेत्राणिसस्यसंपद्भिः कर्षकाणांमुदंददुः धनिनामुपतापंचदैवाधीनमजानतां

१२ जलस्थलौकसः सर्वेनववारिनिषेवया अबिभ्रद्रुचिरंरूपंयथाहरिनिषेवया १३

सरिद्भिः संगतः सिंधुश्चुक्षुभेश्वसनोर्मिमान् अपक्वयोगिनश्चित्तंकामाक्तंगुणयुग्यथा १४

१४ गिरयोवर्षधाराभिर्हन्यमानानविव्यथुः अभिभूयमानाव्यसनैर्यथाऽधोक्षजचेतसः

क्षेत्राणीति तदाहिदृष्टेरविच्छेदेलसंतः प्रियंग्वादयोमुदंददति विच्छेदे शुष्यंतोऽनुतापंचेति १२ अबिभ्रत् अबि भरुः यथाहरिनिषेवयेति हरिसेवायांप्रवृत्ताहिसद्यएवसर्वेरुचिराभवंतितस्याः परमधर्मत्वात्परमसुखत्वाच्चत द्वदिति १३ कामाक्तंकामवासनायुक्तमिति श्वसनोर्मिसाम्यंगुणैर्विषयैर्युज्यतइतिसरित्संगतिसाम्यं १४ अधोक्षज

असंस्कृता अक्षुण्णा नाभ्यस्यमाना इत्यसंस्कृतसाम्यं कालेन चाहता इति तृणाच्छादनसाम्यं १६ यथा कामिन्यः पुंश्चल्यः १७ निर्गुणं ज्यारहितमपि गुणिनि गर्जितशब्दवति अभात् अशोभत गुणव्यतिकरात्मके व्यक्ते प्रपंचे अगुणवान् निर्गुणः पुरुषो यथेति १८ स्वभासाभासितया अहंमत्येति स्वचैतन्येनैव प्रकाशितेनाहंकारेणछन्नो जीवो यथा यद्वा।

मार्गा बभूवुः संदिग्धास्तृणैश्छन्ना ह्यसंस्कृताः नाभ्यस्यमाना श्रुतयो द्विजैः कालहता इव १६ लोकबंधुषु मेघेषु विद्युतश्चलसौहृदाः स्थैर्यं न चक्रुः कामिन्यः पुरुषेषु गुणिष्विव १७ धनुर्वियति माहेंद्रं निर्गुणं च गुणिन्यभात् व्यक्ते गुणव्यतिकरेऽगुणवान्पुरुषो यथा १८ न रराजोडुपश्छन्नः स्वज्योत्स्ना राजितैर्घनैः अहंमत्या भासितया स्वभासा पुरुषो यथा १९ मेघागमोत्सवा हृष्टाः प्रत्यनंदन् शिखंडिनः गृहेषु तप्ता निर्विण्णा यथाऽच्युतजनागमे २० पीत्वापः पादपाः पद्भिरासन्नानात्ममूर्तयः प्राक्क्षामास्तपसा श्रांता यथा कामानुसेवया २१ सरस्स्वशांतरोधस्सु न्यूषुरंगापि सारसाः गृहेष्वशांतकृत्येषु ग्राम्या इव दुराशयाः २२ जलौघैर्निरभिद्यंत सेतवो वर्षतीश्वरे पाखंडिनामसद्वादैर्वेदमार्गाः कलौ यथा २३

अहं विद्वान् दाता वेता शूर इति स्वप्रतीत्यैवारोपितया इति १९ मेघागमेनोत्सवो येषां अतो हृष्टाः २० नानात्ममूर्तयः अनेकरूपदेहाः २१ अशांतानि पंककंटकादियुक्तानि रोधांसि तटानि येषां तेष्वपि न्यूषुः नितरामवसन् सारसाः च

नुन्नाः प्रेरिताः आशिषः कामान् विसृजन्ति यथा राजानः वणिजां पतयो वा द्विजेरिताः पुरोहितैरुक्ताः २४ प्रावृषि कृतां क्रीडां वर्णयति
एवं वनमिति सप्तभिः वर्षिष्ठं समृद्धं २५ २६ वनौकसः पुलिंदीः प्रमुदिताः भगवान् ददृशे तथा वनराजीर्मधुच्युतः मधुस्रवाः
ददृशे गिरेः सकाशाज्जलधाराश्च तासां नादान् आसन्नानि कटवर्तिनीर्गुहाश्च यद्वा वनौकसः प्रमुदिता आसन् तथा वनरा

अमुंचन्वायुभिर्नुन्ना भूतेभ्योऽथाऽमृतं घनाः यथाशिषो विश्पतयः काले काले द्विजेरिताः
२४ एवं वने तद्वर्षिष्ठं पक्वखर्जूरजंबुमत् गोगोपालैर्वृतो रंतुं सबलः प्राविशद्धरिः २५ धेनवो
मंदगामिन्यः ऊधोभारेण भूयसा ययुर्भगवताहूता द्रुतं प्रीत्या स्नुतस्तनीः २६ वनौकसः प्र
मुदिता वनराजीर्मधुच्युतः जलधारा गिरेर्नादानाऽऽसन्नाद्ददृशे गुहाः २७ क्वचिद्वनस्पति
क्रोडे गुहायां चाभिवर्षति निर्विश्य भगवान्रेमे कंदमूलफला[illegible]नः २८ दध्योदनं समानी
तं शिलायां सलिलांतिके संभोजनीयैर्बुभुजे गोपैः संकर्ष[illegible]न्वितः २९ शाद्वलोपरि सं
विश्य चर्वतो मीलितेक्षणान् तृप्तान्वृषान्वत्सतरान्गाश्च स्वोधोभरश्रमाः ३० प्रावृट्
श्रियं च तां वीक्ष्य सर्वभूतमुदावहां भगवान्पूजयांचक्रे आत्मशक्त्युपबृंहितां ३१ एवं निव

जीः वनराजयः वनपरंपराः मधुच्युत आसन् गिरेर्जलधारा आसन् तानेवंभूतान् ततस्तस्मिन् रामकेशवयोर्व
न आददृशे सर्वतो ददर्श तथा भगवान् धाराणां नादान् गुहाश्चेति २७।२८।२९।३०।३१ शरदं वर्णयति ॥६॥ ६ ॥ ७ ॥ ७

भा० द० टी० ७५

एवंनिवसतोरित्यष्टादशभिः विगतानिअभ्राणियस्यांसास्वच्छानिअंबूनियस्यांसाअपरुषःशांतोऽनिलोयस्यांसाचसा
च ३२ नीरजानांउत्पत्तिर्यथातयाशरदाकृत्वानीरजानामुत्पत्त्यावा ३३ व्योम्नइति व्योमादीनांचतुर्णांचतुरोमलान्शरद
हरत् आश्रमिणांचतुर्णांकृसेजाताभक्तिर्यथाऽशुभमसुखंहरति तथाहिब्रह्मचारिणोगुर्वेर्थोदकाहरणश्रमंयथाभक्ति
हरति तथापूर्णस्यतेनानुपयोगात्गुरुभिरपितस्यकृतार्थस्यानियोगात् एवंव्योम्नोऽब्दंशरन्नहारयथाचगृहिणोऽपत्या
दिसांकर्य्यंभक्तिर्हरतिविविक्तवासरुच्युत्पत्तेः तथाभूतानांशावल्यंसांकर्य्यंशरत्वर्षासुदृष्टिभियासंकुलानिवसंतियथा

शरत्समभवद्व्यभ्रास्वच्छांव्वऽपरुषानिला ३२ शरदानीरजोत्पत्त्यानीराणिप्रकृतिंययुः ।
भ्रष्टानामिवचेतांसिपुनर्योगनिषेवया ३३ व्योम्नोऽब्दंभूतशावल्यंभुवःपंकमपांमलं शर
न्जहाराश्रमिणांकृसेभक्तिर्यथाऽशुभं ३४ सर्वस्वंजलदाहित्वाविरेजुःशुभ्रवर्चसः यथा
त्यक्तैषणाःशांता मुनयोमुक्तकिल्बिषाः ३५ गिरयोमुमुचुस्तोयंक्वचिन्नमुमुचुःशिवं ।
यथाज्ञानामृतंकालेज्ञानिनोददतेनवा ३६ ॥ नैवाविंदन्क्षीयमाणंजलंगाधजलेचराः

चवनस्थस्यमलधारणक्लेशंभक्तिर्हरति एवंभुवःपंकंशरत् यथाचयतीनांकामादिवासनामलंश्रीकृसभक्तिर्हरति ·
एवमपांमलंशरदिति ३४ त्यक्तैषणाः त्यक्ताःपुत्रवित्तलोकैषणायैस्ते ३५ गिरयइति अयंभावः नह्युपाध्यायाःकर्म
विद्यामिवज्ञानिनोज्ञानामृतं सर्वतोवितरंतिअपितुकृपयाक्वचिदेवएवंगिरयः शिवंनिर्मलंतोयंक्वचित्क्वचित्मुमु
चुःक्वचित्क्वचिन्नपुनःप्रावृषीवसर्वतइति ३६ गाधेक्षुद्रेजलेचरंतीतितथातेमीनादयः ॥ छ ॥ छ ॥ छ ॥ छ ॥

यस्मात्तद्रूपंशीलंचयस्सतंश्रीकृष्णंनिरीक्ष्यतेनवादितवेणोरसंकीर्णगीतंचश्रुत्वाविमानैर्गच्छंत्योदेव्योदेवानामंकेषुस्थिता
अपिस्मरेणनुन्नसाराः परिक्षिप्तधैर्य्यामुमुहुः मोहेलिंगमाहुःश्रश्यत्प्रसूनाःकवराश्चूडायासांताः विगतानीव्योयासांताश्च
त्रसर्वत्रवकृष्णभेदाम्नातोयसंगतिर्विज्ञव्या १२ क्षरणशंकयैवोत्तभितैरुन्नमितैः कर्णपुटैःपिबंत्यः सत्यः तथाशावाश्चवत्सा
अस्नुतस्तनपानेप्रवृत्ताः समनंतरमेवगीतंश्रुत्वातदेवपीयूषमुत्तभितकर्णपुटैः पिबंतः स्नुतस्तनपयः कवलाःकेव
लंस्तनेभ्यः क्षरितक्षीरयासाः मुखेषुयेषांतेतस्थुः विस्मृतक्रियाबभूवुरित्यर्थः तत्रहेतुःगोविंदंदृशामार्गेणात्मन्या

देव्योविमानगतयःस्मरनुन्नसाराभ्रश्यत्प्रसूनकवरा मुमुहुर्विनीव्यः १२ गावश्चकृष्ण
मुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैःपिबंत्यः शावाः स्नुतस्तनपयःकवलाः
स्मतस्थुर्गोविंदमात्मनिदृशाश्रुकलाःस्पृशंत्यः १३ प्रायोवतांबविहगामुनयोवनेस्मि
न्कृष्णेक्षितंतदुदितंकलवेणुगीतं ॥६॥ ७ निमनसिस्पृशंत्यः आलिंगंत्यः अतएवअश्रूणांकला
लेशाः लोचनयोर्यासांताः गावस्तेचशावाः वत्साः १३ मोअंब मातः अस्मिन्वनेयेविहगाः पक्षिणस्तेप्रायेणमुन
योभवितुमर्हंतिकुतः कृष्णेक्षितंकृष्णदर्शनंपुष्पफलाद्यंतरंविनायथाभवतितथारुचिराःप्रवालायेषांतान्द्रुमभु
जान्वृक्षाणांशाखा आरुह्यतेनश्रीकृष्णेनउदितंप्रकटितंकलवेणुगीतंकेनापिसुखेनमीलितदृशः त्यक्तान्यवा
चःसंतः येशृण्वंतीति यथाहिमुनयः श्रीकृष्णदर्शनंयथाभवतितथावेदोक्तकर्मफलपरित्यागेन ॥६॥ ७ ॥

राम

विकसितकमलवनमिषेणरोमांचितालक्ष्यंतेयेषांवंशेजातस्तेतरवोमधुधारामिषेणआनंदाश्रूमुमुचुः यथाआ
र्याः कुलवृद्धाः स्ववंशेभगवत्सेवकंदृष्ट्वाल्हृष्यत्त्वचोऽश्रूमुंचंतितद्वदिति ९ काश्चिदाहुः हेसखिवृंदावनंभुवः की
र्तिंस्वर्गादपिविशेषेणवितनोति कथंभूतंयद्देवकीसुतस्यपादांबुजाभ्यांलब्धाःलक्ष्मीःशोभासंपद्येनतत् किंचगोविं
दस्यवेणुमनुवेणुनिनादंश्रुत्वाऽनंतरंमंदगर्जितंनीलमेघंतंमत्वामत्तायेमयूरास्तेषांनृत्यंप्रेक्ष्यसंघशस्तत्रतत्रअद्रि
सानुषुअपरतानिउपरतक्रियाणिअन्यानिसमस्तानिमत्वानियस्मिन्ततत्नैतदन्येषुलोकेषुविद्यतेअतोभुवःकीर्तिं

भुंक्तेस्वयंयदवशिष्टरसंह्रदिन्योत्हृष्यत्त्वचोऽश्रूमुमुचुस्तरवोयथार्य्याः ९ वृंदावनंस
खिभुवोवितनोतिकीर्तिंयद्देवकीसुतपदांबुजलब्धलक्ष्मि गोविंदवेणुमनुमत्तमयू
रनृत्यंप्रेक्ष्याद्रिसान्वपरताऽन्यसमस्तसत्वं १० धन्याःस्ममूढमतयोपिहरिण्यएतायानं
दनंदनमुपात्तविचित्रवेषं आकर्ण्यवेणुरणितंसहकृष्णसारैःपूजांदधुर्विरचितांप्रणया
वलोकैः ११ कृष्णंनिरीक्ष्यवनितोत्सवरूपशीलंश्रुत्वाचतत्क्वणितवेणुविचित्रगीतं ॥ वितनो
तीत्यर्थः १० अपराआहुः हेसखि मूढमतयः तिर्य्यग्जातयोपिएताहरिण्योधन्याःकृतार्थाःयावेणुरणितंवेणुनादमा
कर्ण्यनंदनंदनंप्रतिप्रणयसहितैरवलोकनैर्विरचितांपूजांसन्मानंदधुःकृतवत्यः किंच कृष्णसारैःस्वपतिभिःसहिता
एवदधुःअसतपतयस्तुगोपाःक्षुद्रास्तमक्षंतन्नसहंतइतिभावः ११ अन्याऊचुः हेगोप्यः आश्चर्यंशृणुत वनितानामुत्स

श्रीकृष्णसंपरिरब्धवत्यः ६ अनुवर्णनमेवाह अक्षण्वतामितित्रयोदशभिः श्लोकैर्वदंतिहेसख्यः अक्षण्वतां चक्षुष्मतांनावदिदमेवफलंप्रियदर्शनंपरमन्यंनविदामः नविद्मइत्यर्थः तच्चफलंसखिभिः सहपशून्वनंप्रवेशयतोरामकृष्णयोर्वक्त्रं येर्निपीतंतैरेवजुष्टमेवितंनान्यैरित्यर्थः कथंभूतंवक्त्रंअनुवेणुवेणुमनुवर्त्तमानंतंवादयत्तया अनुरक्तकटाक्षमोक्षंस्निग्धकटाक्षविसर्गंअथवायैर्निपीतंतयोर्वक्त्रंतैर्जुष्टंइदमेवाक्षण्वतामक्ष्णोः फलमिति ॥७॥ अन्याआहुः चूतेति चूतप्रवालादीनांविचित्राभिर्मालाभिः अनुरक्तेईषदंतरांतरतः संयुक्तेपरिधानेनीलपी

कृत्वाव्रजस्त्रियः सर्वावर्णयंत्योऽभिरेभिरे ६ गोप्यऊचुः अक्षण्वतांफलमिदंनपरंविदामः सख्यः पशूननुविवेशयतोर्वयस्यैः वक्त्रंव्रजेशसुतयोरनुवेणुजुष्टंयैर्वानिपीतमनुरक्तकटाक्षमोक्षं ७ चूतप्रवालबर्हस्तवकोत्पलाब्जमालानुपृक्तपरिधानविचित्रवेषौ मध्येविरेजतुरलंपशुपालगोष्ठ्यांरंगेयथानटवरौक्वचगायमानौ ८ गोप्यः किमाचरदयंकुशलंस्मवेणुर्दामोदराधरसुधामपिगोपिकानां ॥ तांबरेताभ्यांविचित्रौवेषौययोस्तौक्वचकदाचित्पशुपालगोष्ठ्यांगोपालसभायांमध्येअलंअत्यर्थंविरेजतुः अहोगोपानांपुण्यमितिभावः ८ अन्याऊचुः हेगोप्यः अयंवेणुः किंस्मपुण्यमाचरत्कृतवानकथंयद्यस्मात्गोपिकानामेवभोग्यांसतीमपिदामोदराधरसुधांस्वयंस्वातंत्र्येणयथेष्टंभुंक्तेकथं अवशिष्टरसंकेवलंअवशिष्टंरसमात्रंयथाभवति यतः यासांह्रदिनीनांपयसापुष्टस्तामातृ

इत्यमेवंभूतंवनं तदेवाह शरदास्वच्छानिजलानियस्मिन् तत्वायुनावातं अनुगतं व्याप्तमित्यर्थः १ ततश्चकुसुमि
तवनराजिशुष्मिणोमत्ताः भृंगाद्विजाःखगाश्चतेषांकुलानितैर्घुष्टाःसरांसिसरितःमहीध्राश्चयस्मिन् तद्वनंकृष्णो
वगाह्यप्रविश्यवेणुमवादयत् २ तत्कृष्णस्यवेणुगीतंस्मरस्य उदयोयस्मात्तत् आश्रुत्यश्रुत्वापरोक्षंयथाभवतित
था ३ व्रजेस्थितत्वात् विक्षिप्तमनसः व्याकुलचित्ताः ४ यादृक्कृष्णस्मरणंतासांमनसः क्षोभकंजातंतदाह वर्हापीड

कुसुमितवनराजिशुष्मिभृंगद्विजकुलघुष्टसरःसरिन्महीध्रं मधुपतिरवगाह्यचारयन्
गाःसहपशुपालबलश्चुकूजवेणुं २ तद्व्रजस्त्रियआश्रुत्यवेणुगीतंस्मरोदयं काश्चित्परो
क्षंकृष्णस्यस्वसखीभ्योऽन्ववर्णयन् ३ तद्वर्णयितुमारब्धाः स्मरंत्यःकृष्णचेष्टितं नाशकन्
स्मरवेगेनविक्षिप्तमनसोनृप ४ वर्हापीडंनटवरवपुःकर्णयोःकर्णिकारंविभ्रद्वासः क
नककपिशंवैजयंतींचमालां रंध्रान्वेणोरधरसुधयापूरयन्गोपवृंदैर्वृंदारण्यंस्वपद
रमणंप्राविशद्गीतकीर्तिः ५ इतिवेणुरवंराजन्सर्वभूतमनोहरं ६६ मिति नटवत् वरंवपुर्वि
भ्रत्वृंदावनंप्राविशत् कथंभूतंवनं स्वपदैरंकितैः रमणंरतिजनकंगोपवृंदैर्गीतकीर्तिः तथावर्हमयमापीडंशिरो
भूषणंविभ्रत् वर्हमापीडोयस्मिन्नितिवपुषोविशेषणंवा वेणुवादनमुत्प्रेक्षतेरंध्रान्वेणोरिति अतोनूनंअधरसु
धैवपूर्णाद्वेणोरुच्चलंतीगीतवत्प्रसर्पितुमर्हतीतिभावः ५ अभिरेभिरेवर्णयंत्यः पदेपदेपरमानंदमूर्तिं ॥ ६ ॥

क्लमापह्नतचेतस्त्वेनतासांसंतापोदुःसहइति यद्वा नकारउपमार्थः तदाक्लमस्द्धृतचेतसइति चेतसाक्लममाक्षिप्ययथेत्य
र्थः ४५ पुष्पिरायोगर्भिण्यः अन्वीयमानाःस्ववृषैःस्वपतिभिरनिच्छंत्योपिबलादनुगम्यमानाईश्वराराधनार्थाः क्रियाः
बलातफलैरनुगम्यमानाःसमस्तभोगगर्भायथेति ४६ कुमुत्कुमुदंकुत्सितामत्यस्यइतिदस्युसाम्यं ४७ आग्रयणेर्नवान्न

जनास्तापंजहुर्गोप्योनक्लमस्द्धृतचेतसः ४५ गावोमृगाःखगानार्य्यःपुष्पिरायःशरद्यऽभ
वन् अन्वीयमानाःस्ववृषैःफलैरीशक्रियाइव ४६ उदहृष्यन्वारिजानिसूर्योत्थानेकुमुद्वि
ना राज्ञातुनिर्भयालोकायथादस्युंविनानृप ४७ पुरग्रामेष्वाग्रयणैरिंद्रियैश्चमहोत्सवैः
बभौभूःपक्वसस्याढ्याकलाभ्यांनितरांहरेः ४८ वणिग्मुनिनृपस्नातानिर्गम्यार्थान्प्रपेदिरे
वर्षरुद्धायथासिद्धाःस्वपिंडान्कालआगते ४९ ।इतिश्रीभागवतेमहापुराणेदशमस्कंधे
शरद्वर्णनन्नामविंशतितमोध्यायः २० ॥श्रीशुकउवाच इत्थंशरत्स्वच्छजलंपद्माकर
सुगंधिना न्यविशद्वायुनावातंसगोगोपालकोऽच्युतः १ ॥प्राशनार्थैर्वैदिकैर्यागैरिंद्रियैरिंद्रियार्थै
र्लौकिकैश्चमहोत्सवैःकलाभ्यांरामकृष्णाभ्यांदर्शनादिमहोत्सवाभ्यां ४८ वणिजोयतयोनृपाःस्नातकाश्चदशादष्ट
भ्यांवर्षरुद्धाःसंतोनिर्गम्यार्थान्वाणिज्यस्वाच्छंद्यदिग्विजयविद्यादीन्प्रपेदिरेप्रापद्यंतयथामंत्रयोगादिसिद्धाः आ
युषारुद्धाः कालेआगतेस्वपिंडानयोगादिप्राप्यान्देवादिदेहानिति ४९ इतिदशमेविंशोध्यायः २० एकविंशेशरद्रम्यं

अविंदन्लेभिरे ३७ ३८ शनैःशनैरितितत्रममतामिवपंकमहंतामिवआमतांअपक्कतांजहुरिति ३९ आत्मन्युपरते
त्यक्तक्रियोमुनिरिवनिश्चलांवुःसएवव्युपरतागमः निवृत्तवेदघोषइवतूष्णींबभूवेति ४० केदारेभ्योवद्धशालिक्षेत्रेभ्यो
दृढैःसेतुभिरपोऽगृह्णन्ततःपरंवृष्ट्यभावात्प्राणैरिंद्रियैस्तन्निरोधेनइंद्रियप्रत्याहारेण ४१ देहाभिमानजंबोधइवव्र

यथाऽयुरन्वहंक्षय्यंनरामूढाःकुटुंबिनः ३७ गाधवारिचरास्तापमविंदन्शरदर्कजं यथा
दरिद्रःकृपणःकुटुंब्यविजितेंद्रियः ३८ शनैःशनैर्जहुःपंकंस्थलान्याऽमंचवीरुधः य
थाऽहंममतांधीराःशरीरादिष्वनात्मसु ३९ निश्चलांबुरभूत्तूष्णींसमुद्रःशरदागमे आ
त्मन्युपरतेसम्यङ्मुनिर्व्युपरतागमः ४० केदारेभ्यस्त्वपोऽगृह्णन्कर्षकादृढसेतुभिः य
थाप्राणैःस्रवज्ज्ञानंतन्निरोधेनयोगिनः ४१ शरदर्कांशुजांस्तापान्भूतानामुडुपोऽहरत्
देहाभिमानजंबोधोमुकुंदोव्रजयोषितां ४२ खमशोभतनिर्मेघंशरद्विमलतारकं सत्व
युक्तंयथाचित्तंशब्दब्रह्मार्थदर्शनं ४३ अखंडमंडलोव्योम्निरराजोडुगणैः शशी य
थायदुपतिःकृष्णोवृष्णिचक्रावृतोभुवि ४४ आश्लिष्यसमशीतोष्णंप्रसूनवनमारुतं

जयोषितांमुकुंदइवचेत्यर्थः ४२ शरदाविमलातारकायस्मिन्तत्शब्दब्रह्मणोवेदस्यार्थान् पूर्वोत्तरमीमांसा
निर्णीतान्दर्शयतीतितथातद्वत् ४३ ४४ समःअन्यूनाधिकःशीतश्चोष्णश्चतंनतुगोप्यः ॥ ५२ ॥ ५२ ॥ ५२ ॥ ५२ ॥

ननःपुरइति पुरःपत्तनानिजनपदादेशाः अस्माकंयोगक्षेमहेतुर्वनशैलादयएवेतिभावः २४ ब्राह्मणानपिसंगृह्णन्निग
मयति तस्मादिति स्वयमुत्प्रेक्षितयागप्रयोगकल्पनामाह यइंद्रमखसंभाराइतिसार्द्धपंचभिः संभाराःसाधनानि २५
सूपंमौद्गं पायसंकेवलेपयसिपक्वंसंयावादयोगोधूमादिविक्रियाः क्रमश्चसूपपायसयोः श्रुत्यादोहस्यार्थतोऽन्येषां

नित्यंवनौकसस्तातवनशैलनिवासिनः २४ तस्माद्गवांब्राह्मणानामद्रेश्चारभ्यतांमखः य
इंद्रयागसंभारास्तैरयंसाध्यतांमखः २५ पच्यंतांविविधाःपाकाःसूपांताःपायसादयः संया
वापूपशष्कुल्यःसर्वदोहश्चगृह्यतां २६ हूयंतामग्नयःसम्यग्ब्राह्मणैर्ब्रह्मवादिभिः अन्नंब
हुविधंतेभ्योदेयंवोधेनुदक्षिणाः २७ अन्येभ्यश्चाश्वचांडालपतितेभ्योयथार्हतः यवसंच
गवांदत्वागिरयेदीयतांबलिः २८ स्वलंकृताभुक्तवंतःस्वनुलिप्ताःसुवाससः प्रदक्षिणंचकु
रुतगोविप्रानलपर्वतान् २९ एतन्ममनतंतातक्रियतांयदिरोचते अयंगोब्राह्मणाद्रीणां
मह्यंचदयितोमखः ३० श्रीशुकउवाच कालात्मनाभगवताशक्रदर्पजिघांसता प्रोक्तंनि
शम्यनंदाद्याःसाध्वगृह्णंततद्वचः ३१ तथाचव्यदधुःसर्वंयथाहमधुसूदनः ॥ पाठतः २६ याग

शोभार्थंश्रद्धोत्पादनार्थंचाह हूयंतामिति धेनुदक्षिणाः धेनुसहिताःदक्षिणाःताएववादक्षिणावः युष्माभिः २७
यवसंतृणं २८ २९ सर्वान्शिरःकंपेनानुमोदयन्नाह ॥ गोब्राह्मणाद्रीणामिति मह्यंमम ३० ३१ तद्द्रव्येणतेनमहे ५

भा॰ टी॰ द॰
पृ
८८

मखद्रव्येणगिरिंद्विजान्मतियथापथं ३२ बलीनुपहृत्यदत्वाआदृताःसादराः ३३ अनडुद्युक्तानिउत्तमाःनडुद्भिर्युक्तानि
सद्विजाशिषः द्विजाशीर्भिःसहिताः ३४ गोपविश्रंभणंगोपानांविश्वासजनकंरूपंगतः प्राप्तःस्वबलिमुपहारंआदत्तअ
भक्षयत् ३५ तस्मैआत्मनेआत्मनास्वयंव्रजजनैःसहनमश्चक्रे अहोइतिसार्द्धश्लोकंपठन् ३६ कामरूपीसर्प्पादिरूपः अ

वाचयित्वास्वस्त्ययनंतद्द्रव्येणगिरिद्विजान् ३२ उपहृत्यबलीन्सर्वानादृतायवसंगवां गो
धनानिपुरस्कृत्यगिरिंचक्रुःप्रदक्षिणं ३३ अनांस्यनडुद्युक्तानितेचारुह्यस्वलंकृताः गो
प्यश्चकृष्णवीर्याणिगायंत्यःसद्विजाशिषः ३४ कृष्णस्त्वन्यतमंरूपंगोपविश्रंभणंगतः शै
लोस्मीतिब्रुवन्भूरिबलिमादद्बृहद्वपुः ३५ तस्मैनमोव्रजजनैःसहचक्रेआत्मनात्मने अहो
पश्यतशैलोऽसौरूपीनोनुग्रहंव्यधात् ३६ एषोऽवजानतोमर्त्यान्कामरूपीवनौकसः हं
तिह्यस्मैनमःस्यामःशर्मणेआत्मनोगवां ३७ इत्यद्रिगोद्विजमखंवासुदेवप्रणोदिताः य
थाविधायतेगोपाःसहकृष्णाव्रजंययुः ३८ इतिश्रीभागवतेमहापुराणेदशमस्कंधेचतुर्वि
शतितमोऽध्यायः २४ श्रीशुकउवाच इंद्रस्तदात्मनःपूजांविज्ञायविहतांनृप ॥

स्मैअद्रयेशर्म
णेक्षेमाय ३७ कर्मैवालंप्राक्स्वभावोगुणोवाकर्म्मांगंवातद्वशोवामहेशः वार्त्ताकर्त्रीदेवतेतीयमुक्तादेवक्षोभेषराम
तीनत्वमीष्टा ३८ इतिश्रीभागवतेमहापुराणेदशमस्कंधेचतुर्विंशोध्यायः २४ पंचविंशेरुषाशक्रेव्रजनाशायवर्षति ॥ ८८

३ इत्यगिरिमासाराद्रक्षद्गोकुलंप्रभुः १ कृष्णोनाथोयेषांतेभ्यः १ क्रुद्धःसन्निंद्रःसांवर्तकंनामसंवर्त्तःप्रलयःतत्कर्त्तारंमे
घानांप्रसिद्धंगणंप्राचोदयत्प्रेषयामास ननुकृष्णनाथानांघातिकथंप्रवृत्तइत्याशंक्यात्मसंभावनयानिरस्तविवेकत्वादि
त्याशयेनाहवाक्यंचाहेत्यादिपंचभिः ईशमानीअहमेवेश्वरइतिगर्ववान् २ देवहेलनंदेवस्यममावज्ञां ३ अदृढैरसमर्थैः
कर्ममयैःक्रियानिर्वर्त्यैः अतएवनाममनोनिभैः नाममात्रेणयानौरितिव्यवह्रियतेतत्सदृशैः आन्वीक्षिकीमात्मानुस्मृतिरू
पां ४ तथाचवाचालंबहुभाषिणंवालिशंशिशुंपंडितमानिनंपंडितंमन्यंअतःस्तब्धमविनीतमितिनिंदायांयोजिताऽपीद्रस्यभा

गोपेभ्यःकृष्णनाथेभ्योनंदादिभ्यश्चुकोपसः १ गणंसांवर्तकंनाममेघानांचांतकारिणां इंद्रः
प्राचोदयत्क्रुद्धोवाक्यंचाहेशमान्युत २ अहोश्रीमदमाहात्म्यंगोपानांकाननौकसां कृष्णं
मर्त्यमुपाश्रित्ययेचक्रुर्देवहेलनं ३ यथादृढैःकर्ममयैःक्रतुभिर्नाममनोनिभैः विद्यामा
न्वीक्षिकींहित्वातितीर्षंतिभवार्णवं ४ वाचालंवालिशंस्तब्धमज्ञंपंडितमानिनं कृष्णंमर्त्य
मुपाश्रित्यगोपामेचक्रुरप्रियं ५ एषांश्रियाऽवलिप्तानांकृष्णेनाध्मापितात्मनां धुनुतश्रीमद

रतोश्रीकृष्णंस्तौतितथाहिवाचालंशास्त्रयोनिंवालिशंएवमपिशिशुवत् स्तंभंपश्चान्नयतसंक्षयं॥ ६ ॥
तंनिरभिमानिनंस्तब्धंअन्यस्यवंद्यस्याभावात् अनम्रंअज्ञंनास्तिज्ञेयस्मात्तंसर्वज्ञमित्यर्थः पंडितमानिनंपंडितैर्विद्व
द्भिर्बहुमाननीयंकृष्णंसदानंदरूपंपरब्रह्म मर्त्यंतथापिभक्तवात्सल्येनमनुष्यतयाप्रतीयमानमिति ५ अवलिप्तानांम
त्तानांआध्मापितात्मनांदृंहितदेहानांधुनुतअपनयतश्रीमदेनयत्स्तंभोगर्वस्तम्॥ ६ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ७ ॥ ७ ॥

भा०द०
पू०
९९

विश्वतस्तान्प्रत्याह अहंचेति अनुव्रजे अनु अनंतरमेवागमिष्यामि मरुद्गणैर्देवगणैःसह ७ मघवताइंद्रेणनिर्मुक्तंबंधनं
येषां ते प्रलयकालाभिप्रायेणबद्धा आसन् तदानिर्मुक्तबंधनाः संतः आसारैर्धारासंपातैः पीडयामासुः ८ स्तनयित्नुभिश्श
निभिः स्तनंतः गर्ज्जंतः मरुद्गणैः आवहप्रवाहादिवायुसमूहैः नुन्नाः प्रेरिताः जलशर्कराजलोपलान् ९ स्थूणावत्स्थू

अहंचैरावतंनागमारुह्यानुव्रजेव्रजं मरुद्गणैर्महावीर्य्यैर्नंदगोष्ठजिघांसया ७ श्रीशुक उवाच इत्थंमघवताज्ञप्तामेघानिर्मुक्तबंधनाः नंदगोकुलमासारैःपीडयामासुरोजसा ८। विद्योतमानाविद्युद्भिःस्तनंतःस्तनयित्नुभिः तीव्रैर्मरुद्गणैर्नुन्नावरृषुर्जलशर्कराः ९ स्थूणास्थूलावर्षधारामुंचत्स्वभ्रेष्वभीक्ष्णशः जलौघैःप्लाव्यमानाभूर्नादृश्यतनतोन्नतं १० अत्यासारातिवातेनपशवोजातवेपनाः गोपागोप्यश्चशीतार्तागोविंदंशरणंययुः ११ शिरःसुतांश्चकायेनप्रच्छाद्यासारपीडिताः वेपमानाभगवतःपादमूलमुपाययुः १२ कृष्णकृष्णमहाभागत्वन्नाथंगोकुलंप्रभो त्रातुमर्हसिदेवान्नःकुपिताद्भक्तवत्सल १३ ॥२॥

लाः अभ्रेषुमुंचत्सुसत्सु नतोन्नतं नतंनिम्नं उन्नतंतद्विपरीतंयथाभवतितथाभूर्नादृश्यत १० जातवेपनाःजातकं
पाः ११ तत्रपशूनांयानंविशिनष्टि शिरइति १२ गोपगोपीनांप्रार्थनमाह कृष्णकृष्णेति त्वमेवनाथोय
स्यतद्गोकुलंगवांकुलंवंशम् अस्मांश्चदेवादिंद्रात्त्रातुंरक्षितुंअर्हसि १३ ॥ ५॥ ५॥ ५॥ ५॥ ५॥ ५ ॥

९९

विज्ञापनात्पूर्वमेवकुपितेनेन्द्रेणकृतंतद्वर्षमेने १४ कथंमेनेतदाह अपर्त्विति अपगतऋतुर्यस्यतद्वर्षंअतिशयितोवातोयस्मिन्तदतिवातंशिलामयंशिलाप्रचुरं १५ तत्रप्रतिज्ञापूर्वकंगोवर्द्धनोद्धरणमाह तत्रेतितत्रप्रतिविधिंप्रतीकारंस्वसामर्थ्येनसाधयिष्यामितेनचमौढ्यात्लोकेशमानिनांश्रीमदलक्षणंतमोहरिष्यामिवहुवचनंतुवरुणा

शिलावर्षनिपातेनहन्यमानमचेतनं निरीक्ष्यभगवान्मेनेकुपितेंद्रकृतंहरिः १४ अपर्त्वत्युल्वणंवर्षमतिवातंशिलामयं स्वयागेनिहतेस्माभिरिंद्रोनाशायवर्षति १५ तत्रप्रतिविधिंसम्यक्करिष्यात्मयोगेनसाधये लोकेशमानिनांमौढ्याद्धरिष्येश्रीमदंतमः १६ नहिसद्भावयुक्तानांसुराणामीशविस्मयः मत्तोऽसतांमानभंगःप्रशमायोपकल्पते १७ तस्मान्मच्छरणंगोष्ठंमन्नाथंमत्परिग्रहं गोपायेस्वात्मयोगेनसोयंमेव्रतआहितः १८ इत्युक्त्वैकेनहस्तेनकृत्वागोवर्द्धनाचलं दधारलीलयाकृष्णश्छत्राकमिवबालकः १९ अथाहभगवान्गोपान्हेंऽवतातव्रजौकसः यथोपजोषंविशतगिरिगर्तंसगोधनाः २० ॥ २॥

दीनभिप्रेति १६ ननुदेवाःसात्विकाः त्वद्भक्ताश्चकुतस्तेषांतमस्तत्राह नहीति सद्भावःसत्वमद्भक्तिर्वातद्युक्तानांसुराणांमीशावयमितिविस्मयोगर्वोहियस्मान्नघटंते अतोऽसंतस्तेकिंचतेषांमानभंगोऽनुग्रहएवेत्याह मत्तइति १७ गोपायेरक्षयिष्यामि किंचसोयंमेमयाव्रतोनियमःसंकल्पोवाआहितःधृतइत्यर्थः १८ कृत्वाउत्पाट्यछत्राकंउच्छिलींध्रंयथा

॥२१॥ सव्रजाः शकटमंडलसहिताः सोपजीविनः भृत्यपुरोहितादिसहिताः २२ ॥ पदात् स्थानात् २३ । २४ २५ व्युद

न त्रासइह वः कार्य्यो मद्धस्ताद्रिनिपातने वातवर्षभयेनालं तत्राणं विहितं हि नः २१ तथा
निर्विविशुर्गर्त्तं कृष्णाश्वासितमानसाः यथाऽवकाशं सधनाः सव्रजाः सोपजीविनः २२ क्षु
त्तृड्व्यथां सुखाऽपेक्षां हित्वा तैर्व्रजवासिभिः वीक्ष्यमाणो दधाद्रिं सप्ताहं नाचलत्पदात्
२३ कृष्णयोगानुभावं तं निशम्येंद्रोतिविस्मितः निस्तंभो भ्रष्टसंकल्पः स्वान्मेघान्संन्यवारयत्
२४ खं व्यभ्रमुदितादित्यं वातवर्षं च दारुणं निशाम्योपरतं गोपान्गोवर्द्धनधरोऽब्रवीत् २५
निर्यात त्यजत त्रासं गोपाः सस्त्रीधनार्भकाः उपारतं वातवर्षं व्युदप्रायाश्च निम्नगाः २६
ततस्ते निर्ययुर्गोपाः स्वं स्वमादाय गोधनं शकटोढोपकरणं स्त्रीवालस्थविराः शनैः २७
भगवानपि तं शैलं स्वस्थाने पूर्ववत्प्रभुः पश्यतां सर्वभूतानां स्थापयामास लीलया २८
तं प्रेमवेगान्निभृता व्रजौकसो यथा समीयुः परिरंभणादिभिः गोप्यश्च सस्नेहमपूजयन्मु
दा दध्यक्षताद्भिर्युयुजुः सदाशिषः २९ यशोदा रोहिणी नंदो रामश्च बलिनां वरः कृष्णमा

प्रायाः विगतोदकप्रायाः स्वल्पजला इत्यर्थः २६ शकटोढोपकर ॐ लिंग्य युयुजुराशिषः स्नेहकातराः ३०
णं शकटैरूढमुपकरणं यथा भवति तथा २७ २८ निभृताः पूर्णाः यथोचितं परिरंभणादिभिः समीयुः उपजग्मुः सदाशिषः

३१ ३२ ततोगोवर्द्धनस्थानात्अस्यश्रीकृष्णस्यतथाविधानिगोवर्द्धनोद्धरणादीनिरूपाणिकृतानिकर्माणिगायंत्यः
ईयुःययुःकथंभूताः एवंप्रेम्णात्हृदिस्पृशंतीतित्हृदिस्पृशस्ताः यद्वा कथंभूतस्यप्रेष्ठत्वेनतासांहृदिस्पृशतीतित्हृदिस्पृ
कृतस्य ३३ इतिश्रीमट्टीकायांपंचविंशोध्यायः २५ षड्विंशेविस्मितान्गोपान्कृष्णस्याद्भुतकर्मभिः नंदोगर्गोक्ति

दिविदेवगणाःसाध्याःसिद्धगंधर्वचारणाःतुष्टुवुर्मुमुचुस्तुष्टाःपुष्पवर्षाणिपार्थिव ३१
शंखदुंदुभयोनेदुर्दिविदेवप्रणोदिताः जगुर्गंधर्वपतयस्तुंबुरुप्रमुखान्नृप ३२ ततोनुर
क्तैःपशुपैःपरिश्रितोराजन्स्वगोष्ठंसबलोऽव्रजद्धरिः तथाविधान्यस्यकृतानिगोपिका
गायंत्यईयुर्मुदिताहृदिस्पृशः ३३ इतिश्रीभागवतेमहापुराणेदशमस्कंधेपंचविंशो
ध्यायः २५ श्रीशुकउवाच एवंविधानिकर्माणिगोपाःकृष्णस्यवीक्ष्यते अतद्वीर्यवि
दःप्रोचुःसमभ्येत्यसुविस्मिताः १ बालकस्ययदेतानिकर्माण्यत्यद्भुतानिवै कथमर्ह
त्यसौजन्मग्राम्येष्वात्मजुगुप्सितं २ यःसप्तहायनोबालःकरेणैकेनलीलया कथंवि
भ्रद्गिरिवरंपुष्करंगजराडिव ३॥
माश्राव्यतदैश्वर्यमदर्णयत् १ समभ्येत्यनंदमभिगम्य १ यद्यूचुस्त
दाह बालकस्येति यत्यस्मात्अद्भुतानिकर्माणितस्मात्ग्राम्येषुगोपालेषुकथंजन्मार्हतिआत्मजुगुप्सितं आत्मा
नर्हं २ अद्भुतानिकर्माण्याहुःद्वादशभिःयःसप्तहायनइति कथंविभ्रत्स्थितइति पुष्करंपद्मंगजराट्महागजस्व ३।

महौजसः महाबलायाः तनोर्वयः आयुर्यौवनंवा कालेन यथापीयते तद्वत् ४ कथमित्यनुवर्त्तते अनसः अधः शयानस्य
मासस्य मासाख्यः परिच्छेदकायस्य उदक् ऊर्ध्वं चरणौ हिन्वतः चालयतः प्रपदेन पदाग्रेण हतं विपर्य्यस्तं अनः कथमपत

तोकेनामीलिताक्षेण पूतनाया महौजसः पीतः स्तनः सह प्राणैः कालेनेव वयस्तनोः ४ हिन्वतोऽधः शयानस्य मास्यस्य चरणावुदक् अनोऽपतद्विपर्यस्तं रुदतः प्रपदाहतं ५ए कहायन आसीनो ह्रियमाणो विहायसा दैत्येन यस्तृणावर्त्तमहन् कंठग्रहातुरं ६ क्वचि द्धैयंगवस्तैन्ये मात्रा बद्ध उलूखले गच्छन्नर्जुनयोर्मध्ये बाहुभ्यां तावपातयत् ७ वने संचारय न्वत्सान् सरामो बालकैर्वृतः हंतुकामं बकं दोर्भ्यां मुखतोऽरिमपाटयत् ८ वत्सेषु वत्सरूपेण प्रविशंतं जिघांसया हत्वान्यपातयत्तेन कपित्थानि च लीलया ९ हत्वा रासभदैतेयं तद्बंधूं श्च बलान्वितः चक्रे तालवनं क्षेमं परिपक्वफलान्वितं १० प्रलंबं घातयित्वोग्रं बलेन बल शालिना अमोचयद्व्रजपशून् गोपांश्चारण्यवह्नितः ११ आशीविषतमाहीन्द्रं दमित्वा विम दहृदात् प्रसह्योद्वास्य यमुनां चक्रेऽसौ निर्विषोदकाम् १२ दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषां नो व्रजौ

त ५ यः कृसः दैत्येन ह्रियमाणः सन् तं तृणावर्त्तं दैत्यं कथं अहन्नित्यर्थः ६ हैयंगवस्तैन्ये नवनीतचौर्ये बाहु ७ कसां भ्यां गच्छन् रिंगन्नित्यर्थः ७ मुखतो हंतुकामो यस्तं बकं वेषमरिं बाहुभ्यां मुखतः कथमपाटयत् ८ ९ १० ११ आशीविषतमः अति

श्चौत्पत्तिकः स्वाभाविकः कथमिति किं सर्वेषामात्माऽयं स्यादिति शंका १३ उक्तमपि अति विस्मयेन वदंति क्व सप्तहायन इति १४ प्राक् श्रुतमेव गर्गाचार्यवाक्यं तच्चरितपरिशीलनेन निवृत्ताऽसंभावनस्य नंदस्य कृष्णतत्वाववोधकं जातं सद्

नंदं ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथं १३ क्व सप्तहायनो बालः क्व महाद्रिविधारणं ततो नो जायते शंका व्रजनाथ तवात्मजे १४ नंद उवाच श्रूयतां मे वचो गोपा व्येतु शंका च वोऽर्भके एनं कुमारमुद्दिश्य गर्गो मे यदुवाच ह १५ वर्णास्त्रयः किलास्यासन् गृह्णतोऽनुयुगं तनूः शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः १६ प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मजः वासुदेव इति श्रीमानभिज्ञाः संप्रचक्षते १७ बहूनि संति नामानि रूपाणि च सुतस्य ते गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः १८ एष वः श्रेय आधास्यद्गोपगोकुलनंदनः अनेन सर्वदुर्गाणि यूयमंजस्तरिष्यथ १९ पुराऽनेन व्रजपते साधवो दस्युपीडिताः अराजके रक्ष्यमाणा जिग्युर्दस्यून्समेधिताः २० य एतस्मिन्महाभागाः प्रीतिं कुर्वंति मानवाः ॥ नारयोऽभिभवंत्येतान्विष्णुपक्षानिवासुराः २१ तस्मान्नंदात्मजोऽयं ते नारायणसमो गुणैः श्रिया कीर्त्यानुभावेन तत्कर्मसु न विस्मयः २२ ॥ ऽऽ

दानीं तेनैव वाक्येन गोपाननुपदिशति श्रूयतामिति १५।१६।१७।१८।१९।२०।२१॥ तस्मात्तस्य तु कर्मसु विस्मयो नास्तीति नंदस्योक्तिः ॥ २२ ॥ ६ ॥ ६ ॥

२६
भा॰ द॰
पू॰
८२

इत्युक्त्वा साक्षात् मां प्रति समादिश्य गर्गे च स्वगृहं गते सति तदानीं तथा मन्यमानोपि इदानीं कृष्णं नारायणस्यांशं मन्ये अत्र हेतुः अक्लिष्टकारिणमिति २३ २४ गोवर्द्धनोद्धरणं सपरिकरमनुस्मरन् प्रकटितैश्वर्यस्य श्रीकृष्णस्य प्रीतिं प्रार्थयते देव इति यत्र विप्लवेन यारुद्र्तया देवे इंद्रे वर्षति सति वर्षाश्मपरुषानिलैः अशनिजलशर्करातीव्रवायुभिः सीदत्पालपशुस्त्रि आत्मशरणं सीदंतः पालाः पशवः स्त्रियश्च यस्मिन् तत्तथा आत्मा स्वयमेव शरणं यस्य तत् गोष्ठं दृष्ट्वाऽनुकंपी उ।

इत्यद्धा मां समादिश्य गर्गे च स्वगृहं गते मन्ये नारायणस्यांशं कृष्णमक्लिष्टकारिणं २३ इति नंदवचः श्रुत्वा गर्गगीतं व्रजौकसः दृष्टश्रुतानुभावास्ते कृष्णस्यामिततेजसः मुदिता नंद मानर्चुः कृष्णं च गतविस्मयाः २४ देवे वर्षति यज्ञविप्लवरुषा वर्षाश्मपर्षानिलैः सीदत्पालपशुस्त्रि आत्मशरणं दृष्ट्वानुकंप्युत्स्मयन् उत्पाट्यैककरेण शैलमबलो लीलोच्छिलींध्रं यथा बिभ्रद्गोष्ठमपान्महेंद्रमदभित्प्रीयान्न इंद्रो गवां २५ इति श्रीभागवते महापुराणे दशमस्कंधे षड्विंशोऽध्यायः । २६ शुक उवाच गोवर्द्धने धृते शैले आसाराद्रक्षिते व्रजे गोलोकादाव्रजत्कृष्णं सुरभिः शक्र एव च १

त्स्मयन् हसन् प्रौढिमाविष्कुर्वन् शैलमुत्पाट्य अबलो बालो लीलार्थमुच्छिलींध्रं यथा तथा एकेन करेण बिभ्रत् दधत् गोष्ठमपात् पालितवान् एवं महेंद्रमदभित् गवामिन्द्र इत्युत्तराध्यायार्थं च स्मरति स एवंभूतः श्रीकृष्णो नः प्रीयात् प्रीयतामिति षड्विंशे दसमे व्यक्ताः षड्विंशे दशमो हरिः व्यनक्ति पंचविंशं मां चतुर्विंशतितः पृथक् २५ इति दशमस्कंधे टीकायां षड्विंशोऽध्यायः २६ सप्तविंशे तदा लेभ्ये कृष्णस्य प्रभवं परं वाप्यते सुरभीद्राभ्याम भिषेकमहोत्सवः १

८२

गोवर्द्धने धृते शैल इति शक्रस्य भयेनागमने हेतुः आसाराद्रक्षिते व्रज इति सुरभेर्हर्षेणागमनं १। तत्रेंद्र आगत्य किं कृतवा
न् तदाह विविक्त उपसंगम्येत्यादिना अथाह सुरभिरित्यतः प्राक्तनेन ग्रंथेन विविक्ते एकांते पादयोः पस्पर्श नमस्कार २।
अस्य श्रीकृष्णस्य श्रुतश्चासावनुभावश्च श्रुतानुभावः दृष्टः श्रुतानुभावो येन स इंद्रः नष्टस्त्रिलोकेशोऽहं इति मदो यस्य सः ३
तत्र मम अपराधं क्षमस्वेति वक्तुं तव तावदपराधो नास्त्येव त्वया अनुग्रह एव कृत इत्याह चतुर्भिः विशुद्धसत्वमिति धाम स्वरूपं शां
तं एकस्वरूपं अत एव तपोमयं प्रचुरज्ञानं सर्वज्ञमित्यर्थः कुतः ध्वस्तरजस्तमस्कं ध्वस्ते अविद्यमाने रजस्तमसी यस्मिन् अतए

विविक्त उपसंगम्य व्रीडितः कृतहेलनः पस्पर्श पादयोरेनं किरीटेनार्कवर्चसा २ दृष्टश्रुता
नुभावोऽस्य कृष्णस्यामिततेजसः नष्टत्रिलोकेशमद इन्द्र आह कृतांजलिः ३ इंद्र उवाच वि
शुद्धसत्वं तव धाम शांतं तपोमयं ध्वस्तरजस्तमस्कं मायामयोऽयं गुणसंप्रवाहो न विद्यते ते
ग्रहणानुबंधः ४ कुतो नु तद्धेतव ईश तत्कृता लोभादयो येऽबुधलिंगभावाः तथापि दं
डं भगवान् बिभर्त्ति धर्मस्य गुप्त्यै खलनिग्रहाय ५ पिता गुरुस्त्वं जगतामधीशो दुरत्ययः का

व अयं अस्मदादिषु दृश्यमानः मायाकार्यरूपः गुणसंप्रवाहः गुणैः संप्रोह्यत इति तथा संसार इत्यर्थः लउपान्तदंडः ॥
सः ते तव न विद्यते यतः अग्रहणेनाज्ञानेनानुबध्यत इति तथा सः सर्वज्ञस्य ते नास्तीत्यर्थः अज्ञानसंबंधो वा ४ यदा अज्ञानं तत्कृ
तदेहसंबंधो नास्ति तदा तत्कृतानां लोभादीनां का वार्त्तेत्याह कुतो न्विति तत्कृता देहसंबंधकृताः देहस्य हेतवः तद्धेतवः पुनर
न्यस्य देहस्य हेतवः ननु ज्ञानिनामपि ते दृश्यंत अत आह अबुधलिंगभावाः अज्ञानिनां गमकाः यावद्रागादिमत्वं तावत् ज्ञानि
त्वमेव न सिद्धमित्यर्थः लोभाद्यभावेऽपि मन्मानभंगो दंडार्थमित्याह तथापीति ५। ननु त्वद्दंडे च मम गोपपुत्रस्य का शक्तिः ॥

भा॰ १० पू॰ ८२

किंवाकारणंकोवादंडोमयाकृतइत्यतआह पितेति जगतांत्वंपिताजनकः गुरुरुपदेष्टा अधीशः नियंताइतिदंडधारणेहेतुत्र यंकालत्वात्समर्थः तस्मादुपात्तदंडोहितायकल्याणायस्वेच्छातनुभिः लीलावतारैः समीहसेतव्समीहालीलैवजगदीश मानिनामस्माकंमानविधूननमित्यर्थः ६ कथमेतदित्यतआह यइति मद्विधाश्चतेअज्ञाश्चतेअतोजगदीशमानिनः का लेभयकालेपियथाऽधुनैवातिदृष्टौत्वां अभयंभयमगणयंतं वीक्ष्यआशुतन्मदंजगदीशाइतिमदंहित्वाविगतगर्वाः सं

हितायस्वेच्छातनुभिः समीहसेमानंविधुन्वन्जगदीशमानिनां ६ येमद्विधाज्ञाजगदीशमानिनस्त्वांवीक्ष्यकालेऽभयमाशुतन्मदं हित्वार्य्यमार्गंप्रभजंत्यपस्मयाईहाखलानामपितेऽनुशासनं ७ सत्वंममैश्वर्य्यमदप्लुतस्यकृतागसस्तेऽविदुषःप्रभावं क्षंतुंप्रभोऽथार्हसिमूढचेतसोमैवंपुनर्भून्मतिरीशमेऽसती ८ तवावतारोऽयमधोक्षजेहस्वयंभराणामुरुभारजन्मनां चमूपतीनामभवायदेवभवाययुष्मच्चरणानुवर्तिनां ९ नमस्तुभ्यंभगवतेपुरुषायमहात्मने वासुदेवायकृष्णायसात्वतांपतयेनमः १०

तः आर्यमार्गंवृद्धानांलक्षणंप्रभजंतिअतस्तवईहैवखलानामनुशासनंदंडइत्यर्थः ७ एवंभगवत्स्वरूपंअभिप्रायंचानुवर्ण्यक्षमापयतिसत्वमिति ए वंभूतामसतीमतिर्मेपुनर्माभूदितिप्रार्थनांऽतरं ८ महानयमपराधः कथंक्षंतव्यमितिचेदतआह तवेति स्वयंभराणांपुन रुरुभारजन्मनांबहूनांभाराणांजन्मयेभ्यस्तेषांअभवायनाशाययुष्मच्चरणसेविनांतुभवायअतोममत्वत्सेवकत्वादऽस्तेता पराधिनोपिक्षंतव्यमितिभावः ९ क्षमापयन्नमस्करोतिनमइति तुभ्यंभगवतेकृष्णायनमः पुरुषायसर्वांतर्यामिणेमहात्मने

श्रीमद्भागवतेदशमस्कंधेसप्तविंशाध्याये ... ९९

तर्हि किमहं यादवः नस्वछंदोपात्तदेहायस्वेषांभक्तानांछंदेनइच्छयास्वीकृतदेहाय तत्रापिविशुद्धंज्ञानमेवमूर्त्तिर्यस्यतस्मै
माययासर्वस्मैसर्वरूपायप्रकृतः सर्वस्यबीजायकारणायअतएवसर्वभूतात्मनेनमइति ११ कृतागसइत्यनेनोक्तमपराधंनि
वेदयतिमयेदमिति आसारवायुभिर्गोष्ठनाशायमयेदमकृत्यंविचेष्टितंकृतं १२ तथापिभोईशत्वयाऽनुगृहीतोऽस्मित्य

स्वच्छंदोपात्तदेहायविशुद्धज्ञानमूर्तये सर्वस्मैसर्वबीजायसर्वभूतात्मनेनमः ११ मयेदंभ
गवन्गोष्ठनाशायासारवायुभिः चेष्टितंविहतेयज्ञेमानिनातीव्रमन्युना १२ त्वयेशानुगृ
हीतोऽस्मिध्वस्तस्तंभोहतोद्यमः ईश्वरंगुरुमात्मानंत्वामहंशरणंगतः १३ श्रीशुकउवाच
एवंसंकीर्तितःकृष्णोमघोनाभगवानमुं मेघगंभीरयावाचाप्रहसन्निदमब्रवीत् १४ श्रीभ
गवानुवाच मयातेऽकारिमघवन्मखभंगोनुगृण्हता मदनुस्मृतयेनित्यंमत्तस्येंद्रश्रियाभृ
शं १५ मामैश्वर्यश्रीमदांधोदंडपाणिंनपश्यति तंभ्रंशयामिसंपद्भ्योयस्यचेच्छाम्यनुग्रहं
१६ गम्यतांशक्रभद्रंवःक्रियतांमेऽनुशासनं स्थीयतांस्वाधिकारेषुयुक्तैर्वःस्तंभवर्जितैः १७॥

नुग्रहंदर्शयतिध्वस्तस्तंभइतिवृथोद्यमइतिच १३।१४ इंद्रेणस्वाभिप्रायेनिवेदितेभगवानपितथैवाह मयेति इंद्रश्रि
यादेवराज्येन १५ १६ वः युष्माभिरिति बहुवचनंवरुणाद्यभिप्रायेण क्वगंतव्यंस्वर्गेऽपितवैवेश्वरत्वादितिचेत्तत्राह क्रि
यतामिति मदनुशासनेनयथापूर्वंतत्रस्थीयतामित्यर्थः युक्तैरप्रमत्तैः स्तंभवर्जितैःनिरहंकारैः १७ ॥ छ ॥ छ ॥ छ ॥

२७
भा०द०
पू०
९४

स्वसंतानैर्गोभिः सह उपामंत्र्य कृष्णकृष्णेत्यादि संबोध्य १८ इंद्रेण हता अपि भवता सनाथा वयं कृताः रक्षिता इत्यर्थः १९ त्वं नः परमं दैवं दैवतं देवता अतः हे जगत्पते गोविप्रदेवानां ये अन्ये च साधवः तेषां भवाय अभ्युदयाय अद्य त्वमेवेंद्रो भव २० ननु भवतां इंद्रोऽस्तीति चेत् अत आह इंद्रमिति अस्मत्पुरंदरस्यैंद्रतयेत्यर्थः ननु देव एव इंद्रो भवति कथमहं भवेयमिति चेदत

अथाह सुरभिः कृष्णमभिवंद्य मनस्विनी स्वसंतानैरुपामंत्र्य गोपरूपिणमीश्वरं १८ सुरभिरुवाच कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वसंभव भवता लोकनाथेन सुनाथा वयमच्युत १९ त्वं नः परमकं दैवं त्वं न इंद्रो जगत्पते भवाय भव गोविप्रदेवानां ये च साधवः २० इंद्रं नस्त्वाऽभिषेक्ष्यामो ब्रह्मणा नोदिता वयं अवतीर्णोसि विश्वात्मन् भूमेर्भारापनुत्तये २१ श्रीशुक उवाच एवं कृष्णमुपामंत्र्य सुरभिः पयसात्मनः जलैश्चाकाशगंगाया ऐरावतकरोद्धृतैः २२ इंद्रः सुरर्षिभिः साकं नोदितो देवमातृभिः अभ्यषिंचत दाशार्हं गोविंद इति चाभ्यधात् २३ तत्रागतास्तुंबरुनारदादयो गंधर्वविद्याधरसिद्धचारणाः जगुर्यशो लोकमलापहं हरेः सुरांगनाः संननृतुर्मुदान्विताः २४ ॥ ६ ॥

आह अवतीर्णोसीति २१ सुरभिरात्मनः पयसाभ्यषिंचत् इंद्रश्चाकाशगंगाया जलैरभ्यषिंचत् २२ देवमातृभिरदित्यादिभिर्देवैर्मातृभिश्चेति वा गाः पशून् गां स्वर्गं वा इंद्रत्वेन विंदतीति कृत्वा गोविंद इति चाभ्यधात् नाम कृतवानित्यर्थः ॥ २३ ॥ २४ ॥ ६ ॥ ६ ॥

९४

देवनिकायेषुकेतवरत्वदर्शनीयाः मुख्याइत्यर्थः गावः गाः गां पृथ्वीं पयोभिर्द्रुतां आर्द्रां अनयन् कुर्वन्नित्यर्थः २५ नानारसौघाः।
क्षीरादिवाहिन्यः अकृष्टपच्याः कर्षणं विनैव पक्वाः ओषधयो व्रीह्यादयः आसन् यद्वा अकृष्टपच्या ओषधयो येषु ते गिरयः
उन्मणीन् गर्भगतान् मणीन् उत् उद्गतान् बहिः प्रकटान् अबिभ्रत् अबिभरुः २६ २७ २८ ॥ अहमिंद्रो हि देवानां त्वं गवामिं

तं तुष्टुवुर्देवनिकायकेतवो व्यवाकिरंश्चाद्भुतपुष्पवृष्टिभिः लोकाः परां निर्वृतिमाप्नुवंस्त्र
यो गावस्तदा गा अनयन्पयोद्रुतां २५ नानारसौघाः सरितो वृक्षा आसन्मधुच्युताः अकृष्ट
पच्यौषधयो गिरयोऽबिभ्रदुन्मणीन् २६ कृष्णेऽभिषिक्त एतानि सत्त्वानि कुरुनंदन निर्वैराण्य
भवंस्तात क्रूराण्यपि निसर्गतः २७ इति गो गोकुलपतिं गोविंदमभिषिच्य सः अनुज्ञातो ययौ
शक्रो वृतो देवादिभिर्दिवं २८ इति श्रीभागवते महापुराणे दशमस्कंधे सप्तविंशोध्यायः २७
श्रीशुक उवाच एकादश्यां निराहारः समभ्यर्च्य जनार्दनं स्नातुं नंदस्तु कालिंद्या द्वादश्यां जल
माविशत् १ तं गृहीत्वाऽनयद्भृत्यो वरुणस्यासुरोंऽतिकं ॥ द्वतां गतः गोविंद इति लोके त्वां गा स्तुंति भुवि

मानवाः १ इति दशमे सप्तविंशोध्यायः २७ अष्टाविंशे ततो नंदानयनं वरुणालयात् वैकुंठदर्शनं चाथ गोपानामनुव
र्ण्यते १ गोवर्द्धनं समुद्धृत्य वशे कृत्वा सुरेश्वरं नंदानयानतः कृष्णो वरुणं च वशेऽनयत् २॥१ कलामात्रायां द्वादश्यां पारणा
दराभिनिवेशेनासुरीं वेलामविज्ञाय अरुणोदयात् पूर्वमेव शास्त्रबलेन निशि उदकं प्रविष्टं तदनभिज्ञो वरुणस्य भृत्योऽनय

भा०द० पू० ८५

तथाचशास्त्रंकलार्द्धांद्वादशींदृष्ट्वानिशीथादूर्ध्वमेवहि आमध्याह्नाःक्रियाःसर्वाःकर्त्तव्याःशंभुशासनादित्यादि व
क्ष्यतिचवरुणः अजानतामामकेनेतिभगवद्धर्ममजानतेत्यर्थः २ स्वानांभगवद्धर्मपराणांअभयदःमाभैष्टेत्यभयंदद
त् ३ सपर्य्ययाअर्हणेन ४ अद्यइदानींमेमयादेहोनिभृतःधृतःयदात्वद्दर्शनंजातंतदैवदेहसाफल्यंप्राप्तमित्यर्थः यद्वा

अविज्ञायासुरींवेलांप्रविष्टमुदकंनिशि २ चुक्रुशुस्तमपश्यंतःकृष्णरामेतिगोपकाःभग
वांस्तदुपश्रुत्यपितरंवरुणाहृतं तदंतिकंगतोराजन्स्वानामभयदोविभुः ३ प्राप्तंवीक्ष्य
हृषीकेशंलोकपालःसपर्य्ययामहत्यापूजयित्वाहतद्दर्शनमहोत्सवः ४ वरुणउवाच अ
द्यमेनिभृतोदेहोऽद्यार्थोधिगतःप्रभो त्वत्पादभाजोभगवन्नवापुःपारमध्वनः ५ न
मस्तुभ्यंभगवतेब्रह्मणेपरमात्मने नयत्रश्रूयतेमायालोकसृष्टिविकल्पना ६ अजान
तामामकेनमूढेनाकार्य्यवेदिना आनीतोऽयंतवपितातद्भवान्क्षंतुमर्हति ७ गोविंदनी
यतामेषपितातेपितृवत्सल ममाप्यनुग्रहंकृष्णकर्तुमर्हस्यशेषदृक् ८ ॥छ॥ निभृतःपूर्णमनोरथइत्यर्थः

किंचअद्यैवार्थोधिगतःसर्वरत्नाकरपतिनाऽपिइतःपूर्वंनैवंविधोऽर्थःप्राप्तइत्यर्थः किंचसंसारोपिनिवृत्तएवेत्याशयेनाह
त्वत्पादभाजइति अध्वनःपारंमोक्षं ५ भगवतेनिरतिशयैश्वर्य्यायब्रह्मणेपूर्णायपरमात्मनेसर्वजीवनियंत्रे तत्रहेतुःनय
त्रेति लोकसृष्टिंविकल्पयतियामायासायत्रनश्रूयतेअविद्यमानेवतिष्ठतीत्यर्थः ६ अजानतामूढेनत्वयानत्वत्पित्राहरणंय

८५

९ अतींद्रियं अदृष्टपूर्वं लोकपालस्य महोदयं ऐश्वर्यं १० औत्सुक्ययुक्ताधीर्य्येषां ते अपि किं स्वगतिं स्वस्थानं सूक्ष्मां ब्रह्मा-
ख्यां च उपाधास्यत् उपधास्यति नः अस्मान् प्रापयिष्यतीति संकल्पितवंतः इत्यर्थः ११ इत्येवंभूतं स्वानां स्वेषां संकल्पं अखिल-
दृक् सर्वज्ञः स्वयमेव विज्ञाय तेषां संकल्पसिद्धये कृपया एतद्वक्ष्यमाणं अचिंतयत् १२ अविद्या देहाद्यहंबुद्धिः ततः कामस्ततः

श्रीशुक उवाच एवं प्रसादितः कृष्णो भगवानीश्वरेश्वरः आदायागात्स्वपितरं बंधूनां चा-
वहन्मुदं ९ नंदस्त्वतींद्रियं दृष्ट्वा लोकपालमहोदयं कृष्णे च संनतिं तेषां ज्ञातिभ्यो वि-
स्मितोऽब्रवीत् १० ते त्वौत्सुक्यधियो राजन्मत्वा गोपास्तमीश्वरं अपि नः स्वगतिं सूक्ष्मा-
मुपाधास्यदधीश्वरः ११ इति स्वानां स भगवान्विज्ञायाखिलदृक्स्वयं संकल्पसिद्धये
तेषां कृपयैतदचिंतयत् १२ जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः उच्चावचासु
गतिषु न वेद स्वां गतिं भ्रमन् १३ इति संचिंत्य भगवान्महाकारुणिको हरिः दर्शयामास
लोकं स्वं गोपानां तमसः परं १४ सत्यं ज्ञानमनंतं यद्ब्रह्म ज्योतिः सनातनं ११ कर्म्मैः तैरुच्चावचा-
सु देवतिर्य्यगादिषु भ्रमन् स्वीयां गतिं न वेद १३ स्वं ब्रह्मस्वरूपं लोकं च वैकुंठाख्यं तमसः परं प्रकृतेः परं १४ देहा-
दिपिहितानां दर्शनमशक्यमिति प्रथमं देहादिव्यतिरिक्तं ब्रह्मस्वरूपं दर्शयामास तदाह सत्यमिति सत्यं अबाध्यं ज्ञानं अ-
जडं अनंतं अपरिच्छिन्नं ज्योतिः स्वप्रकाशं सनातनं शाश्वतसिद्धं ब्रह्म गुणापाये गुणापोहे ॥ ५ ॥ ५ ॥ ५ ॥ ५ ॥

भा० द० २९

ज्ञानिनो यत्पश्यंति तत्तद्रूपयैव दर्शयामासेति १५ एवं ब्रह्महृदं ब्रह्मैव हृदइव हृदः तत्र निमग्नस्य विशेषविज्ञानाभावा
त् तं ब्रह्महृदं ते तु नीताः प्रापिताः तस्मिन्निमग्नाश्च तु शब्दोक्तं विशेषमाह पुनः कृष्णेन उद्धृताः समाधेरिवोत्थापिताः सं
ताः ब्रह्मणस्तस्यैव लोकं वैकुंठाख्यं ददृशुरिति ननु ब्रह्म निमग्नानां पुनर्लोकदर्शनमघटितमेवेत्याशंक्याह यत्रेति यत्र
यस्मिन् कृष्णेन निमित्ते सति पूर्वमक्रूरोऽध्यगात् दृष्टवान् शुकपरीक्षित्संवादात् प्राक्तनत्वात् भूतनिर्देशः न ह्यतर्क्यैश्वर्ये
भगवति किंचिदप्यसंभावितमिति भावः अथवाऽक्रूरो यत्र दृष्टवान् तस्य यमुनान्तःस्थस्य ब्रह्महृद इति नाम तं हृदं नीताः
संतो ब्रह्मणो लोकं ददृशुः पुनश्च कृष्णेनोद्धृताः पूर्ववत्तं दृष्ट्वा विस्मिता बभूवुरिति व्यवहितान्वयोऽप्रसिद्धकल्पना च सोढ

॥ यद्धि पश्यंति मुनयो गुणापाये समाहिताः १५ ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः ददृशुर्ब्रह्मणो लो
कं यत्राक्रूरोऽध्यगात् पुरा १६ नंदादयस्तु तं दृष्ट्वा परमानंदनिर्वृताः कृष्णं च तत्र छंदोभिः स्तूयमानं सुविस्मिताः
१७ इति श्रीभागवते महापुराणे दशमस्कंधे अष्टाविंशतितमोऽध्यायः २८ श्रीशुक उवाच भगवानपि ता रात्रीः
शरदोत्फुल्लमल्लिकाः वीक्ष्य रंतुं मनश्चक्रे योगमायामुपाश्रितः १ तदोडुराजः ककुभः करैर्मुखं प्राच्या वि

व्येति १६।१७ इति दशमटीकायामष्टाविंशतितमोऽध्यायः २८ ऊनत्रिंशे तु रासार्थमुक्तिप्रत्युक्तयो हरेः लिंपन्नरुणेन शंतमैः
रेः गोपीभी राससंरंभेतस्य चांतर्द्धिकौतुकम् १ ब्रह्मादिजयसंरूढदर्पकंदर्पदर्पहा जयति श्रीपतिर्गोपीरासमंडलमंडनः २ ननु वि
परीतमिदं परदारविनोदनं कंदर्पविजितत्वप्रतीतेः मैवं योगमायामुपाश्रितः आत्मारामोऽप्यरीरमत् साक्षान्मन्मथमन्मथः आत्म
न्यवरुद्धसौरतइत्यादिषु स्वातंत्र्याभिधानात् तस्माद्रासक्रीडाविडंबनं कामविजयख्यापनायेत्येव तत्त्वम् किंच शृंगारकथोपदेशे
न विशेषतो निवृत्तिपरेयं पंचाध्यायीति व्यक्तीकरिष्यामः ता रात्रीः याता व्रजं सिद्धा मयेमा रंस्यथ क्षपा इति प्रतिश्रुता इत्यर्थः १ तदा त

॥ श्रीधरी ॥

उडुराजश्चंद्र उदगादुदितः किंकुर्वन्दीर्घकालेनदर्शनंयस्यसः प्रियः स्वप्रियायाः मुखं अरुणेन कुंकुमेनयथाविलिंपति
तथाप्राच्याः ककुभोदिशः मुखंशंतमैः सुखतमैः करैरश्मिभिः अरुणेनउदयरागेण विलिंपन्नरूणीकुर्वन्नित्यर्थः सप्रसि
द्धः उडुराजः चर्षणीनांजनानांशुचस्तापग्लानीः मृजन्अपनयन् २ कुमुतकुमुदंविकसनीयंविद्यतेयस्यतंकुमुद्वंतंन
खंडंमंडलंयस्यतरंमायाः आननस्यआभेवआभायस्यतं नवकुंकुममिवअरुणंएवंविधंचंद्रं दृष्ट्वातथाचवनंतस्यकोम
लैर्गोभिः रश्मिभीरंजितंदृष्ट्वाकलंमधुरंजगौअगायत्कथंवामदृशांवामाः मनोहरादृशोयासांतासांमनोहरंयथा ३ अस

सचर्षणीनामुदगाच्छुचोमृजन्प्रियः प्रियायाइवदीर्घदर्शनः २ दृष्ट्वाकुमुद्वंतमखं
डमंडलंरमाननाभंनवकुंकुमारुणं वनंचतत्कोमलगोभिरंजितंजगौकलंवामदृशांम
नोहरं ३ निशम्यगीतंतदनंगवर्द्धनंव्रजस्त्रियः कृष्णगृहीतमानसाः आजग्मुरन्योन्यम
लक्षितोद्यमाः सयत्रकांतोजवलोलकुंडलाः ४ दुहंत्योऽभिययुः काश्चिद्दोहंहित्वास
मुत्सुकाः पयोऽधिश्रित्यसंयावमनुद्वास्यापरायपुः ५ परिवेषयंत्यस्तद्धित्वापाययंत्यः।

पत्न्यार्थेअन्योन्यमलक्षितः नज्ञापितः उद्यमोयाभिस्ताः सकांतोयत्रतत्रगीतध्वनिमार्गेणज ऽऽ शिघ्रमन्वयः
ग्मुः जवेनवेगेनलोलानिचंचलानिकुंडलानियासांताः ४ श्रीकृष्णसूचकशब्दश्रवणेनतत्प्रवणचित्तानांनतत्क्षणमेव।
त्रैवर्गिककर्मनिवृत्तिंद्योतयंत्यइवार्द्धावसितंकर्मविहायययुः तदाह दुहंत्यइतिपयः स्थालीस्थंचुल्ह्यामधिश्रित्यैनतत्क्वाथमप्रती
क्षमाणाः काश्चित्ययुः संयावंगोधूमकणान्नं पक्वंअनुद्वास्यअनुत्ताय ५॥ ६॥ ७ ७ ७ ७ ७ ७ ७ ७ ॥ ॥

२९
भा०द०
पू०
८७

अन्याः प्रमृजंत्यः अंगोद्वर्तनादि कुर्वंत्यः काश्चकाश्चित् कृष्णतुल्यार्थकर्म तदासक्तमनसां अन्यथाकृतमपि फलत्येवेति
द्योतयन्नाह अपत्यस्तेति स्नानतः स्वरूपतश्चोर्ध्वाधोधारणेन विपर्ययं प्राप्तानि वस्त्राभरणानि यासां ताः ७ नच कृष्णाकृ
ष्टमनसां विघ्नाः प्रभवंतीत्याह तावार्यमाणा इति ८ नलब्धो विनिर्गमो याभिस्ताः प्रागपि तद्भावनायुक्तास्तदानितरां दध्यु
रित्यर्थः ९ किंच तदानीमेव तं परमात्मानं श्रीकृष्णं संध्यानतः प्राप्ताः सत्यः गुणमयं देहं जहुरित्याह श्लोकद्वयेन दुःसहेति

शुश्रूषंत्यः पतीन् काश्चिदश्नंत्योऽपास्य भोजनं ६ लिंपंत्यः प्रमृजंत्योऽन्या अंजंत्यः का
श्च लोचने व्यत्यस्तवस्त्राभरणाः काश्चित् कृष्णांतिकं ययुः ७ तावार्यमाणाः पतिभिः
पितृभिर्भ्रातृबंधुभिः गोविंदापहृतात्मानो न न्यवर्तंत मोहिताः ८ अंतर्गृहगताः का
श्चिद्गोप्योऽलब्धविनिर्गमाः कृष्णं तद्भावनायुक्ता दध्युर्मीलितलोचनाः ९ दुःसहप्रे
ष्ठविरहतीव्रतापधुताशुभाः ध्यानप्राप्ताच्युताश्लेषनिर्वृत्याक्षीणमंगलाः १० तमे
व परमात्मानं जारबुद्ध्यापि संगताः ॥ ॥ १० ॥ ननु कथं जहुः परमात्मेति ज्ञानाभावादित्याशंक्याह जारबुद्ध्या
पीति नहि वस्तुशक्तिर्बुद्धिमपेक्षते अन्यथा मत्वापि पीतामृतवदिति भावः ननु तदपि प्रारब्धकर्मबंधने सति कथं जहुस्त
त्राह सद्यः प्रक्षीणबंधना इति ननु कथं भोगमंतरेण प्रारब्धं कर्मक्षीणं भोगेनैव सद्यः क्षीणमित्याह दुःसहेति दुःसहो
यः प्रेष्ठस्य विरहः तेन तीव्रस्तापः तेन धुतानि निर्गतान्यशुभानि यासां ताः तदप्राप्तिपरमदुःखभोगेन पापं प्रक्षीणमित्यर्थः
तथा ध्यानेन प्राप्तो योऽच्युतस्य आश्लेषेण या निर्वृतिः परमसुखभोगः तया क्षीणं मंगलं पुण्यबंधनं यासां ताः ॥ १ ॥ १ ॥

स्कं
८७

अतोध्यानेनपरमात्मप्राप्तेस्तत्कालसुखदुःखाभ्यांनिःशेषकर्मक्षयात् गुणमयंदेहंजुहुरिति ११ ननु यथापतिपुत्रादी
नांवस्तुतोब्रह्मत्वेपिन तद्भजनान्मोक्षस्तथाबुद्ध्यभावात् एवंकृष्णेपिब्रह्मबुद्ध्यभावेनतत्संगतिःकथंमोक्षहेतुरितिशंकते
कृष्णंविदुरिति परंकेवलंकांतंकमनीयंविदुःनब्रह्म १२ परिहरति उक्तमिति अयंभावः जीवेष्वावृतं ब्रह्मत्वंकृष्णस्य
तुहृषीकेशत्वादनावृतं अतोनतत्रबुद्ध्यपेक्षेतिभावः १३ ननुदेहीकथंअनावृतःस्यादतआह नृणामिति गुणात्मनः

जहुर्गुणमयंदेहंसद्यःप्रक्षीणबंधनाः ११ राजोवाच कृष्णंविदुःपरंकांतंनतुब्रह्मतया
मुने गुणप्रवाहोपरमस्तासांगुणधियांकथं १२ श्रीशुकउवाच उक्तंपुरस्तादेतत्तेचैद्यःसि
द्धिंयथागतः द्विषन्नपिहृषीकेशंकिमुताधोक्षजप्रियाः १३ नृणांनिःश्रेयसार्थायव्यक्ति
र्भगवतोनृप अव्ययस्याप्रमेयस्यनिर्गुणस्यगुणात्मनः १४ कामंक्रोधंभयंस्नेहमैक्यंसु
हृदमेवच नित्यंहरौविदधतोयांतितन्मयतांहिते १५ नचैवंविस्मयःकार्योभवताभग
वत्यजे योगेश्वरेश्वरेकृष्णेयतएतद्विमुच्यते १६ तादृष्ट्वांऽतिकमायाताभगवान्व्रजयोषितः
अवदद्वदतांश्रेष्ठोवाचःपेशैर्विमोहयन् १७ ॥ ऽऽ गुणनियंतुर्भगवतएवंरूपाभिव्यक्तिः अतोनदे
हिसादृश्यमत्रवक्तुंमयुज्यतइति १४ अतोयथाकथंचित्तदाशक्तिर्मुक्तिकारणमित्याह काममिति ऐक्यंसंबंधंसौहृदं
भक्तिं १५ नचभगवतोऽयमतिभारइत्याह नचैवमिति यतः श्रीकृष्णादेतत्स्थावरादिकमपिविमुच्यते १६ प्रस्तुतमाह

२९ भा०द० पू० ९८

सर्वाः ससंभ्रममागता विलोक्य सभयमिवाह व्रजस्येति १८ लज्जया मंदहसितमालक्ष्याह रजन्येषेति १९ किंच मातरइति विचिन्वंति मृगयंते वंधूनां साध्वसं कृच्छ्रं मा कृध्वं माकुरुतेत्यर्थः २० ईषत्प्रणयकोपेनान्यतो विलोकयंतीः प्रत्याह दृष्टमिति राकेशस्य पूर्णचंद्रस्य करै रंजितं यमुनास्पर्शिनोऽनिलस्य लीलामंदगतिस्तयाऽएजंतः कंपमानाः त

श्रीभगवानुवाच स्वागतं वो महाभागाः प्रियं किं करवाणि वः व्रजस्यानामयं कच्चिद्ब्रूतागमनकारणं १८ रजन्येषा घोररूपा घोरसत्वनिषेविता प्रतियात व्रजं नेह स्थेयं स्त्रीभिः सुमध्यमाः १९ मातरः पितरः पुत्रा भ्रातरः पतयश्च वः विचिन्वंति ह्यपश्यंतो मा कृध्वं बंधुसाध्वसं २० दृष्टं वनं कुसुमितं राकेशकररंजितं यमुनाऽनिललीलैजंतरुपल्लवशोभितं २१ तद्यात मा चिरं गोष्ठं शुश्रूषध्वं पतीन्सतीः क्रंदंति वत्सा बालाश्च तान्पाययत दुह्यत २२ अथवा मदभिस्नेहाद्भवंत्यो यंत्रिताशयाः आगता ह्युपपन्नं वः प्रीयंते मयि जंतवः २३ भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया तद्बंधूनां च कल्याण्यः प्रजानां चानुपोषणं २४ दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी २५

रूणां पल्लवास्तैः शोभितं २१ सतीः हे सत्यः २२ संरंभक्षुभितदृष्टीः प्रत्याह अथवेति यंत्रिताशयाः वशीकृतचित्ताः उपपन्नं युक्तं प्रीयंते प्रीता भवंति २३ दृष्टादृष्टभयदर्शनेन निवर्तयति भर्तुरित्यादिश्लोकत्रयेण २४।२५॥

रास ९८

तावपिसुखात्मनात्वयेतिवा ३४ अतः अंगहेहासनः अस्माकंतवाधरामृतपूरकेणतवैवहासससहितेनावलोकेनकलगी तेनचजातोयोत्हृच्छयाग्निः कामाग्निस्तंसिंचनोचेदयंतावदेकोग्निस्तथाविरहाज्जनिष्यतेयोग्निस्तेनचउपयुक्तदेहाः दग्ध शरीराः योगिनइवतेपदवीमंतिकंध्यानेनयाम प्राप्नुयाम ३५ ननुस्वपतीनेवोपगच्छत तएवाग्निंसिंचेयुरितिचेत्तत्राहुः यर्हि ति रमायाः लक्ष्म्याः दत्तक्षणंदत्तोत्सवंदत्तावसरंवातदपिक्वचिदेवनसर्वदा अरण्यजनाः प्रियायस्यतस्यतव अरण्यजनप्रिय

पादौपदंनचलतस्तवपादमूलाद्यामः कथंव्रजमथोकरवामकिंवा ३४ सिंचांगनस्त्वद धरामृतपूरकेणहासावलोककलगीतजहृच्छयाग्निं नोचेद्वयंविरहजाग्न्युपयुक्तदेहा ध्यानेनयामपदयोःपदवींसखेते ३५ यर्ह्यंबुजाक्षतवपादतलंरमायादत्तक्षणंक्वचिदर ण्यजनप्रियस्य अस्प्राक्ष्मतत्प्रभृतिनान्यसमक्षमंगस्थातुंत्वयाभिरमितादनपारयामः ३६ श्रीर्यत्पदांबुजरजश्चकमेतुलस्यालब्ध्वाऽपिवक्षसिपदंकिलभृत्यजुष्टं यस्याः स्ववीक्षण कृतेऽन्यसुरप्रयासस्तद्वद्वयंचतवपादरजःप्रपन्नाः ३७ ॥ऽत्वादरण्येक्वचित्यर्हि अस्प्राक्ष्मस्पृष्टवन्तो वयंतत्रचत्वयाऽभिरमिताआनंदिताः संत्यः तदारभ्य अन्यसमक्षंस्थातुमपिनपारयामः तुच्छास्तेनराश्चेतइत्यर्थः ३६॥ त्वत्यादसौभाग्यंत्वतिचित्रमित्याहुः श्रीरिति वक्षसिअसापत्न्यंस्थानंलब्ध्वापितुलस्यासपत्न्यासहतवपदांबुजरजःका मयतेस्मभृत्यैः सर्वैर्जुष्टमितिसौभाग्यातिरेकोक्तिर्यस्याः स्ववीक्षणकृतेश्रीरात्मानंविलोकयत्वित्येतदर्थमन्येषांब्रह्मा ॥ दीनांतपोभिःप्रयासः सातद्रजस्तद्वद्वयमपिप्रपन्नाइति ३७ ॥

श्री
भा० द०
टी०
१००

हे वृजिनार्दन दुःखहंतः त्वदुपासनेन त्वद्भजनस्य आशाया संताः वयं वसतीर्गृहान् विसृज्य हित्वा योगिन इव प्राप्ताः तवसुं दरस्मितविलसितनिरीक्षणेन यस्तीव्रः कामस्तेन तप्तचित्तानां हे पुरुषरत्न दास्यं देहि ३९ ननु गृहस्वाम्यं विहाय दास्यं किमिति प्रार्थ्यते अत्र तत्राहुः वीक्ष्येति अलकावृतमुखं केशांतरैरावृतं मुखं तथा कुंडलयोः श्रीर्ययोस्ते गंडस्थले यस्मिन् अधरे सुधा यस्मिन् तच्च तत्तच्च तव मुखं वीक्ष्य दत्ताभयं भुजदंडयुग्मं वक्षश्च श्रियाएकमेव रमणं रतिजनकं वीक्ष्य दास्य एव भवामेति।

तन्नः प्रसीद वृजिनार्दन तेंऽघ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः त्वत्सुंदरस्मित निरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण देहि दास्यं ३८ वीक्ष्यालकावृतमुखं तव कुंडल श्रीगंडस्थलाधरसुधं हसितावलोकं दत्ताभयं च भुजदंडयुगं विलोक्य वक्षः श्रियैकरमणं च भवाम दास्यः ३९ का स्त्र्यंऽग ते कलपदायतवेणुगीतसंमोहितार्यचरितान्न चलेत्त्रिलोक्यां त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन् ४० व्यक्तं भवान्व्रजभयार्तिहरोऽभिजातो देवो यथादिपुरुषः सुरलोकगोप्ता ॥ १ ॥ ४१ ॥ ३९ ॥ ननु सुस्मितमौपपत्यमित्युक्तं तत्राहुः कास्त्रीति अंग हे श्रीकृष्ण कलानि पदानि यस्मिन् तत् आयतं दीर्घं मूर्छितं स्वरालापभेदस्तेन पायंतेरकलपदामृतमयं वेणुगीतं तेन संमोहिता का वा स्त्री आर्यचरितान्निजधर्मात् न चलेत् यन्मोहिताः पुरुषाः अपि चलिताः किंच त्रैलोक्यसौभगमिति यत् यतः अबिभ्रन् अबिभरुः॥ ४ ॥ ४ ॥ ४ ॥ ४ ॥ ४ ॥ ४॥

एम
१००

फल्गुतुच्छंकृच्छ्रंदुःसंपादकंऔपपत्यंजारसौख्यं २६ किंचश्रवणादिति २७ २८ चिंताप्राप्तानांस्थितिमाह कृत्वेति
शुचःशोकाद्दुर्न्नवेनश्वसनेनशुष्यंतोबिंबफलसदृशाअधरायेषुमुखेषुतानिअवनम्रवांचितत्वात्तथाअंगुष्ठेनमहीं लि
खंत्यःतथागृहीतकज्जलैरश्रुभिःकुचकुंकुमानिक्षालयंत्यःतूष्णींस्थिताःयतःउरुर्दुःखभरोभारोयासांताः २९

अस्वर्ग्यमयशस्यंचफल्गुकृच्छ्रंभयावहं जुगुप्सितंचसर्वत्रऔपपत्यंकुलस्त्रियाः २६
श्रवणाद्दर्शनाद्ध्यानान्मयिभावोनुकीर्त्तनात् नतथासन्निकर्षेणप्रतियाततोगृहान् २७
श्रीशुकउवाच इतिविप्रियमाकर्ण्यगोप्योगोविंदभाषितं विषण्णाभग्नसंकल्पाश्चिंतामा
पुर्दुरत्ययां २८ कृत्वामुखान्यवशुचःश्वसनेनशुष्यद्बिंबाधराणिचरणेनभुवंलिखंत्यः अस्रै
रुपात्तमषिभिःकुचकुंकुमानितस्थुर्मृजंत्यउरुदुःखभराःस्मतूष्णीं २९ प्रेष्ठंप्रियेतरमिवप्र
तिभाषमाणंकृष्णंतदर्थविनिवर्त्तितसर्वकामाः नेत्रेविमृज्यरुदितोपहतेस्मकिंचित्संरंभग
द्गदगिरोऽब्रुवतानुरक्ताः ३० गोप्यऊचुः मैवंविभोऽर्हतिभवान्गदितुंनृशंसंसंत्यज्यसर्ववि
षयांस्तवपादमूलं भक्ताभजस्वदुरवग्रहमात्यजास्मान्देवोयथादिपुरुषोभजतेमुमुक्षून् ३१
किंचप्रेष्ठमिति किंचित्संरंभेणकोपावेशेनगद्गदागिरोयासांताः अब्रुवतस्मसंरंभेकारणंप्रेष्ठमित्यादिप्रियेतरमिवंप्रति
भाषमाणंप्रत्याचक्षाणं ३० नृशंसंक्रूरंदुरवग्रहहेस्वच्छंदतवपादमूलंभक्ताःसेवितवतीरस्मान्भजस्वमात्यजेति ३१

अपिच यदुक्तं यत्पत्यपत्येत्यादित्वयाधर्मविदेति सोपहासं एवमेतत् उपदेशानां पदे विषयेत्वय्येवास्तु उपदेशपदत्वे हेतुः
ईशइति विविदिषावाक्येन सर्वोपदेशानामीशपरत्वावगमादिति भावः ईशत्वे हेतुः आत्माकिलभवानिति भोग्यस्यहि सर्व
स्य भोक्ता आत्मैवेशइति अतः प्रेष्ठो बंधुश्च भवानेवेति सर्वबंधुषु करणीयं त्वय्येवास्त्वित्यर्थः अथवा धर्मोपदेशानां पदे स्थाने ध
र्मोपदेष्टरि त्वयि सति अस्मासु च धर्मजिज्ञासमानासु सतीषु त्वया धर्मविदा यदुक्तं एवमेतदस्तु न तु त्वं धर्मोपदेष्टा किं तु भवा
नात्मेति अथवा यदुक्तं एतदुपदेशपदे तज्ज्ञो चरे पुरुषे ऽस्तु नाम त्वयि तु ईशे स्वामिनि सति एवं कांक्षानैवमित्यर्थः यत्त्वनुभृ

यत्पत्यऽपत्यसुहृदामनुवृत्तिरंग स्त्रीणां स्वधर्म्म इति धर्म्मविदा त्वयोक्तं अस्त्वेवमेतदुप
देशपदे त्वयीशे प्रेष्ठो भवांस्तनुभृतां किल बंधुरात्मा ३२ कुर्वंति हि त्वयि रतिं कुशलाः स्व आत्म
न्नित्यप्रिये पतिसुतादिभिरार्तिदैः किं तन्नः प्रसीद परमेश्वर मास्मछिंद्या आशां भृतां त्वयि चि
रादरविंदनेत्र ३३ चित्तं सुखेन भवताऽपहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये ॥ ६ ॥

तां त्वमात्मा फलरूप इति यद्वा यदुक्तं पत्यादिशुश्रूषणं धर्म इति एवमेतत्त्वय्येवास्तु कुतः उपदेशपदे शुश्रूषणीयत्वेनो
पदिश्यमानानां पत्यादीनां पदे अधिष्ठाने कुतः ईशे न हि ईश्वरमधिष्ठानं विना कोपि पतिपुत्रादिर्नामेति अन्यत्समानं अ
लमतिविस्तरेण ३२ एतत्सदाचारेण द्रढयंत्यः प्रार्थयंते कुर्वंतीति कुशलाः शास्त्रनिपुणाः तथा च शास्त्रं किं प्रजया
करिष्यामो येषां नोऽयमात्मा लोक इत्यादि ३३ किंच प्रतियातेति यदुक्तं तदशक्यं त्वयैव चित्तादीनामपहृतत्वादित्याहुः
चित्तमिति यदस्माकं चित्तमेतावंतं कालपर्यंतं सुखेन गृहेषु निर्विशति तत्त्वयाऽपहृतं करावपि यो गृहकृत्ये निर्विशतः